॥ अथविषमीशब्देन्दुशेखरव्याख्याप्रारभ्यते ॥

श्रीगणेशायनमः॥ ब्रह्मेशाद्यैः सुरवरगणैःस्तूयमानोप्यपारोव्यक्ताव्यक्तेसृजतिभरतिप्रापयत्युच्चभावम्॥ यद्भ्रूभंगात्सृजतिभुव
नंब्रह्मरुद्रादिसाश्रीर्वक्षःश्लिष्टाजयतिसविभुःश्रीनिवासोवृषाद्रौ॥१॥ आत्रेयवंशविधुनासकलकलापारदृश्वनासुधि
या॥ श्रीराघवेंद्रगुरुणाक्रियतेशब्देंदुशेखरव्याख्या॥२॥ नवयुक्तिगुंफिततयाप्रौढांतांचंद्रिकांतुसंक्षिप्य॥ विषमपदव्या
ख्याविवृतिंकुर्वेहंबालबोधाय॥३॥ पातंजलइत्यादिश्लोकत्रयमेकान्वयं॥ संतीदीव्यतीतिविग्रहः॥ कक्षःशुष्ककान
नम्॥ कक्षस्तुदोर्मूलेशुष्ककाननेइत्यभिधानं॥ मनोरमोमार्धदेहमिति॥ तेनमनोरमोक्तार्थाप्रकाशनम्॥ मनोरमा
याः क्वचिद्गुणत्वंसूचितंभवति॥ समुचितमिति॥ तत्त्वंचैतच्छास्त्रप्रवर्तकत्वसंबंधित्वात्॥ तिरस्कृत्येत्यर्थेति॥ निवृत्त
प्रेषणात्धातोर्हेतुमतिणिजितिभावः॥ वृत्तिपरिच्छेदकत्वेनेति॥ शक्तिग्राहकत्वेनेत्यर्थः॥ स्वरसंधिस्तुनप्रवर्तते॥ व
र्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्इतिकैयटोक्तंतुनयुक्तम्॥ तदुपदेशकालेऽजादिसंज्ञानामनिष्पादेपिसव
र्णसंज्ञादिफलस्यदीर्घादेः तुल्यास्यसूत्रादाविवस्वरसंधेरत्रप्रवृत्तौबाधकाभावात्इतिदीक्षितोक्तंदूषणमुद्दिधीर्षुणा
त्त्वकोशकारेणोक्तः कैयटग्रंथः उपजीव्यविरोधात्संधिर्नेत्यर्थकतयाव्याख्यातस्तद्दूषयितुमनुवदति॥ यत्त्विति॥ त

थाचाविकृताकारश्रवणमुपजीव्यजातशक्तिग्रहउपजीव्याविकृतश्रवणविरोधिसंधिकार्यंनजनयतीतिभावः॥शक्तग्रहे
णेति॥इदमयुक्तम्॥नह्यकारादिषुशक्तिग्रहमुपजीव्यप्रवर्तमानंसंधिकार्यमर्थांतरेशक्तिग्रहजननद्वारस्योपजीव्य
शक्तिग्रहंनविहंतीतिरत्नकोशग्रंथार्थः॥किंतूक्तरीत्याऽविकृताकारादिश्रवणमुपजीव्यजातःशक्तिग्रहःस्वोपजीव्यवि
कृताकारादिश्रवणंनविहंतीतितथाचत्वदूषणमपरास्थेषोर्धानुष्कस्यकंठाडंबरमनुकरोति॥अकादिषुशक्तिनिश्चय
मुपजीव्यप्रवर्तमानंसंधिकार्यमुक्तनिश्चयविरोधिसंदेहाधायकतयानसंधिकार्यंप्रवर्तयतीत्याशंकते॥नचेति॥आम्ना
यशब्दोदृष्टांतार्थः॥अनुबंधानांमहेश्वरकृतत्वेतत्प्रत्याख्यानासंगतिमाशंक्यसमाधत्ते॥ञमङणनमिति॥प्रत्याख्या
नभाष्यस्यदृष्टार्थकत्वखंडनपरत्वेवृत्तिसूत्रस्यभाष्यासंगतिमाशंक्यसमाधत्ते॥वृत्तिसूत्रस्येति॥अतएवेति॥चतु
र्दशसूत्र्यावेदत्वादेवेत्यर्थः॥शरीरीति॥अनेनाशरीरेणेश्वरेणवेदःकृतइतिलभ्यते॥इदंतुनयुक्तं॥तस्यापौरुषेयत्वा
त्॥अस्यमहतोभूतस्यनिःश्वसितमितिश्रुतेश्च अनायासेनोच्चारितार्थकत्वात्॥विमर्शोविचारेक्रियमाणेशिवादागत
मेवैतत्सूत्रजालंनतुढक्कानिनादएव॥अंत्याःवर्णाश्चतुर्दशयत्रसमुदाये इतिविग्रहः॥अजितियोगविभागादच्॥यद्वा

चतुर्दशानां पूरणश्चतुर्दशः सर्वेषामप्यविशेषेण तथात्वात्॥ विग्रहस्तु पूर्ववत्॥ अंत्यमित्यस्यासमस्तत्वं त्यभूतश्चतुर्द
शवर्णसमुदाय इत्यर्थः॥ तत्कारणं चेति॥ अन्ये त्वनुबंधाः पाणिनिकृता एव॥ समुपादिष्टमित्यस्यैव मनुबंधा आसंजकाश्च
इति महेश्वरेणोपदिष्टमित्यर्थ इत्याहुः॥ ननूपदेशपदस्यादेचउपदेशोऽइत्यादौ पाणिनीयापूर्वोच्चारणार्थकत्वमिव म
हेश्वरीयापूर्वोच्चारणार्थकत्वं तथा च तन्निमित्तत्वं प्राप्तमित्यत आह॥ मंत्रोपदेशवदिति॥ न हि मंत्र उपदेष्टृनिर्मित इति भा
वः॥ अत एवेति॥ महेश्वरकर्तृकत्वाभावादेवेत्यर्थः॥ इदं चिंत्यं॥ श्रीवादरायणकर्तृकस्यापि भारतादेः सर्ववेदपारायणज
पुण्यफलकत्वोक्तेः॥ ननु हल्प्रत्याहारसिद्धेः प्राक् उपदेशेऽजित्यस्य वाक्यार्थबोधाभावेऽप्यण्प्रत्याहारकाले लणित्यका
रस्येत्संज्ञालोपाभ्यामपहारसंभवेनाक्षरसमाम्नायिकानामेव ग्राहकत्वाल्लोपदेन ग्रहणेन सानुनासिकाकारस्यानण्त्वा
त्तेन दीर्घसानुनासिकग्रहणं न संभवतीत्याशंक्याह जातिग्रहणस्येति॥ मामिति॥ आनिति अशब्दस्य द्वितीयाबहुवचन
म्॥ तस्य नश्छव्यप्रशानिति रुत्वेऽनुनासिकत्वे च आँ इति रूपम्॥ यद्यपि जातिपक्षे निरनुनासिकाकारस्यापि हल्त्वं सु
वचं तथापि सानुनासिकोच्चारणबलात्सानुनासिकस्यैवाच्त्वजात्यवच्छिन्नस्य हल्त्वमित्यभिप्रेत्य सानुनासिकाकारे

त्तिस्तथैवोत्सर्गेणप्रवर्त्तितव्यमित्यर्थः॥प्रतिषेधइति॥तन्निमित्तत्वमित्यर्थः॥एवमुक्तिमिति॥एतदेवज्ञापयतीत्याद्युक्तिः
नन्वेवंसंग्राहकवाक्यार्थबोधेहलंत्यंनविभक्तावित्यनयोरन्योन्याश्रयाभावेपिलस्यसंस्कारकेउपप्लूयमानवाक्या
र्थबोधेन्योन्याश्रयःसुस्थएवापवादवाक्यार्थाबोधंविनातद्विषयपरिहारेणोत्सर्गवाक्यार्थोपप्लवायोगात्॥यद्वानविभ
क्तावित्येतद्वाक्यार्थबोधेतद्विषयपरिहारेणेतस्यप्रवृत्तिः॥एतत्प्रवृत्तौसुप्तिङादिप्रत्याहारसिद्धिः॥तत्सिद्धौचनवि
भक्तावित्येतद्वाक्यार्थबोधइत्यन्योन्याश्रयइत्यतआह॥नविभक्ताविति॥पदार्थज्ञानमात्रेणेति॥तथाचनविभक्तावि
त्येतद्वाक्यार्थबोधाभावेपितद्घटकप्रतियोगिसमर्पकतुस्मादितिप्रथमांतपदार्थज्ञानमात्रेणपादीनांतद्भिन्नत्वेनतन्नि
षेधाविषयत्वग्रहेणतत्रेत्संज्ञाप्रवृत्तिःसुलभेत्याशयः अणुदिदित्यत्रोदितिक्वादीनांसंज्ञेतिबोध्यं॥तद्बललभ्यमिति
तेनहलविलेखलनइतिधातौलस्यनेत्त्वम्॥उपदेशेनंत्यत्वादितिभावः॥इदंत्यसदृशेनेत्यर्थइति॥प्रत्याहारनिष्प
त्तिकालेंत्यस्यासत्त्वेपितस्यस्मरणमात्रेणतत्सादृश्यज्ञानमिणादिशब्दघटककादिषुसुलभमित्याशयः॥व्यक्तिपक्षार्थ
इतिप्रत्युच्चारणवर्णव्यक्तिर्भिन्नेतिपक्षइत्यर्थः॥अत्रसादृश्यानुयोगिनःसमुदायाघटकत्वेपितत्प्रतियोगिनस्तथात्वात्

तेनैव समुदायाक्षेपः सुलभः॥ आहुरित्युत्तरमचिस्मुधात्वित्यारभ्यस्पष्टमित्यंतो ग्रंथः प्रक्षिप्तः प्रकृतासंगतेः॥ एवंविधे
नाग्रिमग्रंथेन पुनरुक्तेश्च॥ समासाभावस्येति॥ निपातएकाजनाङित्यादौ कर्मधारयदर्शनादयुक्तमेतत्॥ नांतरीयक
तयेति॥ अंतराविनाभवोंतरीयः॥ गहादित्वाच्छः॥ ततः स्वार्थिकः नशब्देन समासश्च॥ प्राधान्यादित्संज्ञाभवनक्रियायामु
पदेशाइत्यस्यान्वयभ्रमवारणायाह॥ तत्रविद्यमानमिति॥ क्रियामात्रंकालोपाधिरितिमतेउपदेशशब्दआद्योच्चारणप
रः॥ मतांतरेलक्षणयातदधिकरणकालपरः॥ तेनैधादीनांधादेर्नैत्वं॥ उपदेशोनंत्यत्वात्॥ प्रधानक्रियान्वयेतुतद्दुर्वार
म्॥ यद्यप्यधिकरणसप्तम्यंतस्यसाक्षात्कर्तृकर्मणोरेवान्वयः॥ तद्द्वाराक्रियान्वयइतिवक्ष्यमाणास्वसित्थांतरीत्याविद्य
मानइत्यध्याहारोनात्रावश्यकः॥ अतएवाक्षेषुशौंडइत्यत्रप्राचांविद्यतिक्रियाध्याहारोनक्वैर्दूषयिष्यतेतथाप्येधादे
र्धस्येत्ववारणायाप्रधानान्त्यविशेषणतयाविद्यतिक्रियाध्याहारःकृतः॥ नचैवंक्रियान्वयोप्यस्यकर्त्राद्यन्वयद्वारेणैवेति
कारकप्रकरणस्थशेखरविरोधः साक्षादन्वयस्यैवात्रस्वीकारादितिवाच्यम्॥ तस्मात्क्षशौंडस्तिष्ठतीत्यादिविषयत्वात्॥
यत्रहिकर्तृकर्मविशेष्यतयाक्रियाभासतेतत्रतद्वारैवसप्तम्यंतस्यक्रियान्वयसंभवेक्रियांतराध्याहारोनयुक्तः॥ साक्षाद

प्रधानक्रियायामन्वयश्चायुक्तः॥अक्षशौण्डपदयोः समासानापत्तेः॥यत्रतु कर्तृकर्मक्रियेतद्विशेषणेयथाकटेशेतेदेव
दत्तः स्थाल्यांपक्वओदनइत्यादौ॥तत्रतुसाक्षादेवक्रियान्वयः॥तत्रविद्यमानमंत्यमित्यत्रापीत्थमेव ॥एवमक्षेषुशौण्डस्यवत्व
मित्यादावप्यध्याहृतविद्यतिक्रियायामेवसप्तम्यंतार्थस्यान्वयइत्यलंप्रसक्तानुप्रसक्त्या॥यद्यप्येधादेर्धकारादिरुपदेशे
विद्यमानाकारस्येत्संज्ञोत्तरमंत्यश्चेत्युक्तव्याख्यायामप्येधादेर्धस्येत्संज्ञादुर्वारा॥तथाप्याद्येवयसिधनीदेवदत्तइत्यादावि
वधर्मिपारतंत्र्येणोपदेशकालावच्छिन्नांत्यत्वेपिभासतेइतिनकश्चिद्दोषः॥तेनेतिउपदेशइत्यस्येत्संज्ञाभवनक्रियायामन्व
यंविहायांत्यपदार्थान्वयिविद्यतिक्रियायामन्वयकरणेनेत्यर्थः॥अन्यत्रत्विति॥ऋहलोर्ण्यदित्यादौतत्पूर्वमपिहल्प्रत्याहार
सिद्धिसंभवादितिभावःअंतरंगत्वादिति॥तेननधातुलोपइतिसूत्रस्थंधातुग्रहणंकिंलूञ्लवितेतिभाष्यंसंगच्छते।धातुसं
ज्ञायाः क्रियावाचकत्वज्ञानाधीनत्वेनबहिरंगत्वात्॥सित्युत्तरमिति॥वर्णोपदेशकालेतदव्यवहितोत्तरकालेचहल्प्रत्या
हारस्यासिद्धेरितिभावः॥प्रायइति॥मनिनादेर्नकाराद्यभिप्रायेणप्रायःपदं॥तत्रहितवर्गांतर्गतत्वेननिषेधविषयतासंभाव
नयानविभक्ताविितिवाक्यार्थबोधोत्तरमेवतद्विषयत्वनिश्चयेननिषेधवाक्यार्थबोधोत्तरमेवतत्रेत्संज्ञा॥एवंसुपःपकारेपि

विभ[illegible]घटकत्वेननिषेधविषयत्वसंशयात्॥तस्यैवार्थवत्वादिति॥तेनैवेति॥इदमयुक्तं॥सानुबंधकेनानुबंधविनिर्मु
क्तोपस्थितेरसंभवात्॥आर्धधातुकस्येडि त्यादौउपदेशोत्तरमेवेत्संज्ञालोपाभ्यामपहारेजश्त्वानापत्तेश्च॥तस्माद्वा
क्यार्थबोधोत्तरमेवविधेयत्वप्रतिपत्युत्तरमेवे त्संज्ञालोपौ॥उपदेशोत्तरकालेइत्संज्ञेतिभाष्यमप्येवमेवकथंचिन्नेयम्
अन्येतूच्चारणंपरिनिष्ठितस्यैवोच्चारणोत्तरमेवतदपहारेणकाकस्येवनशब्दाद्वर्धतेत्याहुः॥तदुपस्थाप्यएवेति॥किति
चेत्यादौतद्बोध्यइत्यर्थइतिभावः॥तत्वाभावादिति॥इदंचिंत्यंअत्राउपीत्संज्ञाप्रवृत्तौबाधकाभावात्॥चितः सप्रकृते
र्बव्हकजर्थइतिवार्तिकस्वारस्येनचितिप्रत्ययएवतत्प्रवृत्त्यानदोष इतितुवक्तुंयुक्तमितिकेचित्॥कुंडिनश्चिच्चित्स्वर
प्रवृत्तिररुचिबीजम्॥भाष्योक्तमिति॥इदंचभाष्यंअनुबंधानांप्रयोगासमवायित्वात्॥प्रयोगासमवायिनश्चाणत्व
ग्रहणकशास्त्रेपुनर्वृत्तिरित्यभिमानेन॥नव्यमतेपीष्टिसमुदायस्यैवार्थवत्वेनतदैकदेशेकारस्यनिरर्थकत्वात्॥अ
णुदित्सूत्राप्राप्तेः॥अत्रकेचिदित्यारभ्याहुरित्यंतोग्रंथोऽस्मत्कृतत्रिपथगायांविवृत्तः॥विधाविति॥इदमयुक्तं॥नविधौ
परःशब्दार्थइतिन्यायविरोधात्॥श्नित्यादिर्नित्यमित्यादेर्मिद्बोध्यार्थकत्वेनसोभवतीत्यर्थेपिस्वरसिध्यानकारेत्सं

ज्ञकइतिविशेषणवैयर्थ्यात्॥एवमनुवादेपीत्यग्रिमग्रंथोप्युक्तः॥बोधकएवनकारेत्संज्ञकत्वस्यपूर्वमुक्तेः॥तत्र
नाच्परइति॥आटआकारइतिशेषः॥अभ्रआँअपएतद्व्यावृत्तिरिति॥नन्वस्याप्यादेशत्वात्कथमेतद्व्यावृत्तिरिति
चेन्न॥स्वयमेवपरिनिष्ठितप्रयोगरूपत्वेनप्रयोगशासनकरणत्वरूपोपदेशानशब्दार्थाभावादित्याशयात्॥कैयटेतु
शास्त्रेउच्चारितोयोऽनुनासिकःसइत्संज्ञकइत्युक्तं॥पूर्वंप्रातिपदिकत्वेइति॥अनुबंधविनिर्मुक्तपदार्थोपस्थितिरित्य
नेनापिविरुणद्धिइतिबोध्यं॥यदामंजकादि निवृत्त्यर्थंप्रातिपदिकानामुपदेशः कर्त्तव्यइतितदायंप्रतिषेधइति
कैयटोक्तंवार्तिकोत्थानबीजंदूषयितुमाह॥एतद्भाष्येति॥नचप्रातिपदिनांप्रतिषेधेचित्रङ्गादीनामपीत्संज्ञानापत्तिरि
तिवाच्यं॥एतच्चात्रयुक्तंयदित्कार्याभावादित्संज्ञानस्याद्यत्रेत्कार्यंभविष्यतितत्रेत्संज्ञा॥तद्यथाऽऽगस्तिकौंडिन्ययोरग
स्तिकुंडिनजित्यग्रिमभाष्येणवार्तिकारंभेकुंडिनचश्चकारस्येत्संज्ञानस्यादित्येवंपरेणास्यापिदोषस्यदत्तप्रायत्वात्।ल
स्यासिद्धेश्चेति॥भावेघञंतत्वेपिलक्ष्यसिद्धिप्रकारश्चंद्रिकायामुपपादितोद्रष्टव्यः॥लोपश्चेतिइदमनुबंधाअनेकां
ताइतिपक्षाभिप्रायेणतत्पक्षेशकारस्यादेशबोधकसमीपेशकारोच्चारणमात्रेणशित्त्वांगीकारादितिबोध्यं॥आनुना

वि॰
६

सिक्यर्थंतइति॥ नकर्मधारयान्मत्वर्थीयइतिनाश्रितं असुब्वतइतिभाष्यप्रयोगेणक्वचिल्लाघवानादरात्॥ यणापत्ति
रिति॥ वस्तुतआंगत्वाद्यस्येतिलोपापत्तिर्द्रष्टव्या॥ नचेत्वंतदपवादः॥ इकारलोपानपवादत्वात्॥ कारिकादेोचारितार्थ्या
च्च॥ ऊकालोच्॥ एकद्वित्रिमात्रकत्वेति॥ एकादिनवांतानांद्वंद्वस्यासाधुतायाःस्वेनवक्ष्यमाणतयाएकद्विकरणेहेतुरि
तिवदयमप्यसाधुरेव॥ तावदत्रकालग्रहणमिति॥ अन्येतुशब्दस्यलक्षणेयेकमात्रापरत्वेनवर्णपरत्वाभावान्माणु
दित्सूत्रप्रवृत्तिरित्याहुः॥ तितउच्छत्रमिति॥ ननुवर्णाद्वर्णांतरोच्चारणेऽर्धमात्राकालव्यवायस्यस्वीकारेणअइत्यस्य
नद्विमात्रत्वमितिचेन्नावर्णोच्चारणाधिकरणकालत्वेनादोषात्॥ तदेतदभिप्रेत्यवक्ष्यते ॥अच्ग्रहणमिति॥ अंतरं
गत्वेनेति॥ कार्यिणोपिनिमित्तत्वमाश्रित्येदं ॥ सइति॥ ऊर्ध्वभागप्रतिहतवायुव्यंजितोजित्यर्थः॥ हलउदात्तादिसंज्ञा
यांबाधकाभावंचाह॥ हल्स्वरइति॥ तथाचहलउदात्तादिसंज्ञायांकिंबाधकंनतावदचःस्थानेउदात्तस्यहलआपत्तिः
॥आंतर्यतोऽचएवोदात्तस्यप्रवृत्तेः॥ नापिहल्स्थानेतस्यापत्तिर्हल्स्वरप्राप्तौव्यंजनस्याविद्यमानवत्वादित्यर्थः॥ प्रा
प्तेति॥ तां ताट्टापिबोध्यं॥ विवृतस्येत्यर्थइति॥ मातृकायांत्वीषत्स्पृष्टएवलृकारोदीर्घइतिभावः लोकइति॥ प्लु

तावेच इदुतावित्येतद्विषयः॥ चतुर्मात्रास्तु कांदसा इतिभावः॥ तुल्यास्यप्र॥ यजुष्येकेषामिति॥ नन्वत्रप्रयत्नभेदादेवनस्ता
वर्ण्यमित्यरुचेराह तद्वानासामिति॥ अनेनयावत्स्थानसाम्यएवसवर्णसंज्ञेत्यत्रायंनिर्द्देशएवज्ञापकमितिसूचितंभ
वति ह्रस्वदीर्घयोरिति॥ इदमुपलक्षणं॥ उदात्तानुदात्तयोरित्यपिबोध्यं॥ ननुमात्राकालिकत्वादिरूपह्रस्वत्वादिकंत्वि
तिवक्ष्यमाणग्रंथेनास्यविरोधः॥ तत्रह्रस्वत्वादिजनकयत्नस्यास्यबाह्यत्वोक्तेरितिचेन्न॥ तज्जनकयत्नानांबाह्यत्वे
पितत्तत्स्थानस्थितवायुसंयोगानामास्यांतर्गतत्वाविरोधात्॥ तथापीति॥ नन्विकारैकारयोः सावर्ण्यंदुर्वारम्॥ इकार
स्यापिकंठतालुत्वादितिचेन्न विवृततरत्वादिप्रयत्नभेदेनसावर्ण्यस्यवारयितुंशक्यत्वात्॥ अतएवैदेतोर्नसावर्ण्यं॥
किंचवस्तुतः कंठस्थानत्वंनसावर्ण्योपयुक्तम्॥ किंतुशिक्षायांतथोक्तमेवतदेतदभिप्रेत्याह। भिन्नस्थानकथनेति॥ ए
षामिति॥ ञमङणनानामित्यर्थः॥ ञमङणनानामपिनासिकास्थानत्वेशिक्षायामेषांतत्त्वेनानुक्त्यान्यूनतास्यादितिभा
वः॥ जिह्वाग्रादाविति॥ अत्रतद्व्यवहारः प्रातिशाख्येभ्योर्लघुप्रयत्नतरइत्यत्रचबोध्यः॥ तत्रहिलघुतरः प्रयत्नोजिह्वाग्रा
दिर्यस्योच्चारणइतिविग्रहेजिह्वाग्रादीनांप्रयत्नशब्देनव्यवहारात्॥ लघुतरत्वंचशिथिलत्वं॥ कङयोः सावर्ण्येआनुना

सिकत्वमेषामधिकोगुणइतिभाष्येणनासिकायाआस्यशब्देनतत्रत्यप्रयत्नस्यप्रयत्नशब्देनाग्रहणबोधनरूपायुक्तिर्वस्व
कि॰ ७ सिकत्वमेषामधिकोगुणइतिभाष्येणनासिकायाआस्यशब्देनतत्रत्यप्रयत्नस्यप्रयत्नशब्देनाग्रहणबोधनरूपायुक्तिर्वस्व
माणागुणशब्दस्यसावर्ण्यानुपयुक्तत्वांतरतम्यपरीक्षोपयोगित्वरूपार्थबोधकत्वेगुणशब्देनापिसूचिताभवति॥इत्य
भिप्रेत्याह॥वर्णाभिव्यक्त्यनंतरइति॥ननुगुणशब्दस्योक्तार्थकत्वेवृध्दिरादैजितिसूत्रस्यस्यभेदकत्वाद्गुणस्येत्यस्यापि
तथैवार्थः स्यात्॥तथाचैकोयमात्मोदकंनामतस्यगुणभेदादन्यत्वंभवति॥अन्यदिदमुष्णमन्यदिदंशीतमितिदृष्टांत
भाष्यमसंगतं स्यात्॥तेनतस्यधर्मार्थकत्वलाभादित्याशंक्यगुणपदस्यानेकार्थत्वेनसमाधानमभिसंधायाह॥अकार
दिनिष्ठेति॥तर्ह्युदात्तत्वादीनांगुणत्वव्यवहारानुपपत्तिः॥स्वाश्रयवर्णजनकस्यानविशेषावच्छिन्नवायुसंयोगातिरिक्त
स्यतज्जननेऽनुपयोगादित्यतआह उदात्तत्वादीनामिति॥नचोदात्तत्वाद्यंशेउक्तदृष्टांतभाष्यंनस्वारसिकमितिवाच्यं
॥तस्यानुनासिक्यांशेएवस्वारसिकत्वेनोदात्तत्वाद्यंशेकथंचियोजनीयत्वात्॥उदात्तत्वादीनांसावर्ण्यानुपयुक्तत्वंतूद
त्तादिजनकयत्नस्येत्यादिनावक्ष्यमाणंद्रष्टव्यं॥नन्वेवंङणादीनामपिस्वरूपोत्पत्तौकंठाद्यवच्छिन्नवायुसंयोगस्यैवहेतु
त्वं॥तद्गतानुनासिक्यजननेतुनासावच्छिन्नवायुसंयोगस्यहेतुत्वमितिकङयोरपितुल्यस्यानत्वंनासिकायाआस्यांत

गतत्वेपिसुवचमितितस्यास्तद्बहिर्भावोपपादनप्रयासोऽयमित्याशंक्याह॥ङणादीनामिति॥ नन्वेवं शिक्षायांङण

दीनांनासिकास्थानानुक्त्यान्यूनतेत्याशंक्याह॥अनुस्वारेति॥एतेनप्रथमदूषणंनिराकृतंवेदितव्यं॥द्वितीयंनिराचष्टे क

ङयोस्त्विति अतएवबात्येति॥नासिकायाआस्यशब्देनतत्रत्यप्रयत्नस्यचप्रयत्नशब्देनाग्रहणादेवेत्यर्थः अन्येतुमुख

नासिकावचनइतिसूत्रेमुखनासिकमावचनमस्यमुखनासिकावचनः॥किमिदमावचनं॥ईषद्वचनमावचनं॥

किंचिन्मुखवचनंकिंचिन्नासिकावचनमितिभाष्येणभागस्यमुखेनोच्चारणाद्भागस्यनासिकयेतिकैयटग्रंथेनचङणादी

नांभागतोनासिकास्थानत्वंभागतोमुखस्थानत्वमितिपक्षोऽवतिष्ठते॥मुखोपसंहितावानासिकावचनमस्यसोयंमुख

नासिकावचनमितिभाष्येणमुखस्यनासिकायाश्चदंतरालंस्थानांतरमेवानुनासिकस्येतिदर्शयतीतिकैयटेनचमु

खनासिकयोरंतरालंस्थानांतरमेवेत्यपरः पक्षः॥मुखद्वितीयावानासिकावचनमस्येतिभाष्येणयदातुसर्वएवव

र्णोमुखेननासिकयाचोच्चार्यतेइतिकैयटेनचसर्वभागावच्छेदेनमुखेननासिकयाचोत्पत्तिरितितृतीयः पक्षः॥त्रिष्व

पिपक्षेषुनासिकानास्यांतर्गतेतिस्पष्टमेव॥किंचमुखग्रहणंकिमर्थं॥नासिकावचनोनुनासिकइत्युच्यमानेयमानु

कि० स्वाराण[illegible]प्रसज्येत॥अथनासिकाग्रहणंकिमर्थंमुखवचनोनुनासिकइत्युच्यमानेकचटतपानामेवप्रसज्येतेतिभाष्येणनासि
८ कानास्यांत[illegible]तिस्पष्टमेवोक्तंभवति॥नासिकायास्तदंतर्भूतत्वेनासिकास्थानानांयमानुस्वाराणामपिमुखवचनत्वेनकचतटपानामे
वेत्यवधारणासंगतेः।प्रासादवासिन्यायेनमुखग्रहणखंडनपरभाष्येणचनासिकानास्यांतर्गतामुखनासिकावचनमितिसूत्रमपि
नासिकायाआस्यबहिर्भावेसमंजसं।तथाच।सानुनासिकाकाराद्दीनांङादीनांचोभयावछिन्नवायुसंयोगेनैवस्वरूपोत्पत्तिः।आनुनासि
कंतूभयेषांधर्मः॥इयांस्तुविशेषः।अकारादीनामनुनासिक्याद्यानियताः ङकारादीनांतुनियताइत्यनुस्वारयमानां चेतिशिक्षायास्त्वे
षांनासिकैवस्थानमित्यर्थः।गुणशब्दस्तुधर्मपरएवतथैवलोकप्रसिध्देः।सावर्ण्यानुपयुक्तत्वंतुनगुणशब्दार्थः मानाभावात् एकोयमा
त्मोदकंनामतस्यगुणभेदादन्यत्वंभवत्यन्यदिदमुष्णमितिभाष्यस्वारस्येनचगुणशब्दोधर्मपरइतिलभ्यते॥आंतरतम्यपरीक्षोपयु
क्तश्चेतिविशेषणवैयर्थ्यंच॥नचपृथक्पृथक्द्वयप्रवृत्तिनिमित्तत्वेपितद्विवक्षितुंशक्यं।त्वन्मतेआभ्यंतरप्रयत्नानामपिगुणत्वाप
त्तेः।स्थानार्थगुणप्रमाणकृतमित्यभियुक्तोक्तेप्रमाणस्यपृथक्करणंब्राह्मणवसिष्ठन्यायेन।यद्वापाणिनीयशिक्षायांयस्ययस्सवर्ण
स्ययद्यत्स्थानमुक्तंतत्तदेवास्यशब्देनगृह्यते।पंचमानांचनासिकास्थानानुक्त्यानतस्यास्यशब्देनग्रहणं।अनुस्वारयमानांचेति॥चश

धारणे स च भिन्नक्रमः॥ नासिकैव स्थानमित्यर्थः॥ तथा च यस्य वर्णस्य पाणिनीयशिक्षायामुक्तं स्थानं वर्णांतरस्यापि तत्रोक्तं
तद्द्वयं परस्परं सवर्णसंज्ञं भवतीति तुल्यास्यसूत्रार्थः वलयोस्तु न सावर्ण्यम् शिक्षोक्तकंठादिस्थानपर्याप्तस्थानताया एव सवर्णसंज्ञो
पयोगित्वात्॥ न चैवं कङयोः सावर्ण्यापत्तिः॥ शिक्षांतरे ङकारस्य नासिकास्थानत्वोक्त्या कंठपर्याप्तस्थानत्वाभावा
दिति वाच्यं॥ पाणिनीयशिक्षोक्ततत्स्थानकत्वे सति तदुक्ततदितरस्थानराहित्यस्यैव तत्पर्याप्तस्थानकत्वशब्दार्थत्वेन वि
वक्षितत्वात्॥ शिक्षांतरोक्तस्य च प्रायेणैतच्छास्त्रीयकार्यनिर्वाहानुपयुक्तत्वात्॥ अत एवाइउण्सूत्रेऽकारस्य विवृतोप
देशः कर्तव्य इति वार्तिकभाष्ये संगच्छेते॥ अन्यथा शिक्षांतरे आकारस्य विवृततरोक्त्या तदसंगतिः स्पष्टैव॥ यावत्साम्यं तु
न तुल्यशब्दार्थः तेजसा सूर्यतुल्यो ब्राह्मण इत्यादौ यत्किंचित्साम्येपि तुल्यशब्दप्रयोगदर्शनात्॥ लुग्वेति सूत्रे उदोष्ठ्येति सू
त्रे च पर्याप्तिर्न विवक्षितेति॥ अदुद्रुह्दिवुउर्षतीत्यादौ न दोष इत्याहुः॥ समुदितमिति॥ तदेव स्थानत्वपर्याप्त्यधिकरणमित्य
र्थः॥ तथा च नवलयोः सावर्ण्यमित्यर्थः॥ प्रत्येकमिति॥ अत एवाग्रे पंचतुर्धा करोतीत्यस्याग्नीषोमीयेऽप्रवृत्त्योभौ वा विशे
षादिति कात्यायनसूत्रस्याप्रामाण्यं जैमिनिनोक्तं॥ वस्तुतः दैवतार्थकतद्धितस्यैंद्राग्नादौ चतुर्धाकरणादिवारणाय तथा

कि॰ २ स्वभावांगीकारेपिइतरस्तत्थितेतथाऽनंगीकारात्॥अतएवदेवदत्तस्यतद्भार्यायाश्चापत्येदेवदत्तिरित्याद्यप्रयोगप्रतिज्ञाविरो
धाच्चेत्युक्तरीत्याऽदुक्हिवुऊर्षतीत्याद्यसिद्धिरितिदूषणंद्रष्टव्यम्॥नाज्झलाविविति सूत्रेणेति॥वस्तुतस्तूष्म णामीषद्विवृ
तत्वेपीषत्स्पृष्टलृकारलकारयोः सावर्ण्येयहोत्लृकारइत्यत्रतोर्लीतिपरसवर्णापत्यातयोस्तदभावायनाज्झलाविविति सूत्रस्या
वश्यकत्वात्॥अधिकंनाज्झलाविविति सूत्रेऽस्मत्कृतव्याख्यायांकौस्तुभप्रभायांबोध्यम्॥स्पर्शेत्यादेः क्रमेणस्पृष्टेषत्स्पृष्ट
विवृतसंवृतव्याख्यानरूपत्वं ईषद्विवृतत्वंचेति।ईषत्स्पृष्टत्वमित्यर्थःयणामिति यणामीषत्स्पृष्टत्वस्यापिव्यापकधर्मस्यसत्वेनयका त्वे स्पृ
रस्यचवर्गेणरेफस्यटवर्गेणसावर्ण्यापत्तिः तथाचस्थानांश इवप्रयत्नांशेपियावत्साम्यमेवविवक्षितमितिभावः॥अंचितइति न
नुयकारगतानुनासिकस्यनासिकास्थानत्वेपियकारस्यतत्स्थानत्वाभावान्नतस्यानुस्वारेणस्थानतआंतर्यं॥किंतुञकारस्यैवेति
सएवप्रवर्तते॥अतएवञ्चुंडुवेत्यत्रञकारःपरसवर्णोनेतिविवरणेउक्तमित्यरुचेराह॥आदाविति॥तेनयणोनुनासिकइत्यत्रसव
र्णग्रहणापकर्षेपिचतुर्मुखइत्यादौणकारापत्तिर्न॥प्रयत्नभेदादिति॥ननुअनेनैवविवृतस्यसंवृतादेशोतस्यासिद्धत्वेनोत्तरोऽय
कारोविवृतएवेतिदीर्घोदुर्वारइतिचेन्न॥अअइतिएषङ्दृष्टेनोत्तराकारस्यमूलतएवसंवृतत्वकल्पनात्॥घत्वजश्त्वानुनासि

केष्विति॥ ननु घत्वे कृते जश्त्वमपवादत्वात् बाधित्वाऽनुनासिकं चांतरंगत्वाद्बाधित्वा भष्भावेन कश्चिद्दोष इत्यरुचेराह॥ वस्तु
त इति॥ परत्वाज्जश्त्वेति॥ न च भष्य इतिवत्त्वं जश्त्वाऽनुनासिकत्वयोरपवादः॥ तांते चरितार्थत्वात्॥ तत्र तसौ मत्वर्थे इत्यने
न भत्वाज्जश्त्वाद्यप्राप्तेः॥ इदमुपलक्षणमधिकारत्वाभावे गोमानित्यादौ तलोपाद्यापत्तेः॥ अत एव न मुनेति॥ अत एव वाक्यभे
देनान्वयादेव॥ तन्निषेधेऽसिद्धत्वनिषेधः॥ पदैकवाक्यतयान्वये तु अदसोसेरित्यादिनाऽसिद्धत्वविशिष्टस्य मुत्वस्य विधानेन
मुने इत्यनेनापि तथाविधस्य मुत्वस्यैव निषेध्यत्वेनामुने इत्यत्र मुत्वानापत्तिः॥ असिद्धत्वस्य प्राधान्येना विहितत्वेन तन्निषेधा
योगात्॥ शास्त्रप्रवृत्ताविति॥ तेनाग्नी इतीत्यत्र प्लुते प्रवृत्तेपि तस्यासिद्धत्वात् प्रगृह्यसंज्ञाप्रवृत्तिः॥ अंतरंगत्वादिति॥ पूर्वत्रासि
द्धनिमित्तकत्वादित्यर्थः॥ वस्तुतोऽस्यांतरंगशब्दार्थत्वाभावात्॥ उदाहरणाभावाच्चासंगतमेतत्॥ सपादसप्ताध्यायीस्थकार्य
संभावनायां त्रैपादिकस्याप्रवृत्तेः॥ अग्नी इतीत्यादावपि यथोद्देशपक्षाश्रयणेन प्लुतात्पूर्वमेव प्रगृह्यसंज्ञा॥ शास्त्रप्रवृत्तौ निया
मकमिति॥ पूर्वोक्तं त्वयोः प्रगृह्येति सूत्रस्य वक्ष्यमाणशेखरादिष्टोपपन्नं॥ सोदीर्णमिति॥ सोचि लोपे चेति सुलोपः॥ उदीर्ण इति
ऋ गतावित्यस्यौत्पूर्वस्य रूपम्॥ आत्मांतःकरणमिति॥ इदमसंगतं॥ आत्मपदस्य जीवपरत्वे बाधकाभावात्॥ इच्छयोत्पन्नय

त्नेति॥इकुयोप्रन्नोयत्नोयस्मिन्नितिविग्रहः॥तथाचविवक्षयेत्येतत्॥यत्नेनेत्येतस्याप्युपलक्षणमितिभावः॥ततोयत्नविशे
षेणेति॥इदमेकएवयत्नः कार्यजनकोवर्णनाशकश्चेतिपरः सन्निकर्षइतिसूत्रस्यभाष्यविरुद्धं॥तस्मात्तेनैवयत्नेनेतिव
क्तुमुचितम्॥औपाधिकभेदाभिप्रायेणवाकथंचिद्योज्यं॥वायुप्रेरणारूपमिति॥अल्पवायुमहावायुप्रेरणारूपमित्यर्थः॥अवि
वक्षेति॥कार्यानुपयोगित्वमित्यर्थः॥अतएवेति॥पूर्वत्वाभावादेवेत्यर्थः॥तथाचवर्गेष्वाद्याश्चत्वारएवयमाइतिप्राचीनविवर
णंतत्सदृशार्थकतयायोज्यमितिभावः॥ननुपज्ञामज्ञामित्यादौश्रुत्वंनस्यात्यमेनव्यवधानादितिचेन्न॥अशरीरंयमंप्राहु
रित्यादिवचनेनयमादीनामशरीरोक्त्यातद्व्यवधानस्याकिंचित्करत्वात्॥अयोगवाहाइति॥द्वितीयचतुर्थयमभिन्नाइत्यर्थः॥जि
ह्वामूलीयइति॥उपध्मानीयस्यस्थानकथनंतूपध्मानीयोपधसोस्योष्ठजत्वेनवकारार्थंकथंचिद्भवतीतिभावः॥यमादीनामि
ति॥आदिपदेनानुस्वारविसर्गौअत्रयमानुस्वारयोर्नासिकास्थानकथनं॥अथमुखग्रहणंकिमर्थंनासिकावचनोऽनुनासिकइती
यत्युच्यमानेयमानुस्वाराणामेवप्रसज्येतेइतिभाष्योक्तदिशामुखग्रहणंव्यावृत्तिबोधनाय॥आदंतइति॥स्थः कचेतिकप्रत्ययांता
दंतस्ततष्टाप्॥नित्यस्त्रीलिंगोयम्॥अंतस्थाभिश्चसंयुतमितिशिक्षावाक्यानुरोधादितिभावः॥एतेनविश्वपाशब्दवदादंतत्वे

ईषत्स्पृष्टमंतस्थानामितिनिर्देशासंगतिरित्यपास्तम्॥ स्पर्शोष्मणोरिति॥मातृकापेक्षयेदं॥नाज्झलावित्यादिनिर्देशेनेति॥
चझयोः सावर्ण्याभावेहस्यस्थानेझः पूर्वसवर्णोनस्यादितिभावः॥अशक्यत्वंस्यादिति॥इदमयुक्तं॥अयोगवाहानांदीर्घादीनां
सानुनासिकयवलानांदुःस्पृष्टसंज्ञकडकारस्येषत्स्पृष्टऋकारलृकारयोश्वासत्वापत्तेः॥अक्षरसमाम्नायेएषामनुपदिष्टत्वात्
एओङ्सूत्रस्थमनुपदिष्टंसत्कथंविज्ञातुंशक्यमितिभाष्यंतुवेदलोकसाधारण्येनसावर्ण्यानित्यत्वज्ञापकत्वायोगात्॥ नच
स्थानेंतरतमसूत्रेणनिर्वाहः॥वकारस्यस्थानेलृकारस्वरूपसंप्रसारणापत्तेः॥तस्माद्दकारस्यलृकाराभावायवर्णोपदेशेलृका
रपाठइत्येवतत्त्वं॥पृथगनुबंधत्वेति॥गम्लृसृप्लृगतौएजृभ्राजृदीप्तावित्यादौ॥ओकारस्यौष्ठ्यत्वमिति॥एतच्चप्रकृतानुपयु
क्तत्वादुपेक्ष्यं॥एकारशकारादीनामिति॥अन्येत्वाकारहकारयोरादिपदेनग्रहणमित्याहुः॥अत्रादिशब्दग्राह्यंचिंत्यमितिके
चित्॥यजुष्ष्येकेषामितिनिर्देशादिकारेकारयोर्नसावर्ण्यं॥नन्वकारहकारयोः सावर्ण्येशिवोर्च्य इत्यादौहशि चेत्येवसिद्धेऽ
तोरोरितिव्यर्थंतस्मात्तयोस्तन्नेत्याशंक्याह॥हशिचेत्येवेति॥तथाचअकारहकारयोरपिसवर्णसंज्ञासत्वादाकारेपरतोपिहशि
चेत्युत्वेप्राप्ते ह्रस्वाकारएवेतिनियमार्थमतोरोरितिसूत्रमितिभावः॥अतएवभाष्येइति॥आकारप्रश्लेषादेवेत्यर्थः॥अणसु

वि० द्विष्ययेति॥तेनसंज्ञायाः संज्ञिनः पूर्वमुच्चारणंनदोषाय॥तस्याएवोद्देश्यत्वादिसूचितंभवति॥ एतत्परिभाषाज्ञापकमिति॥
११ स्थालीपुलाकन्यायेनैकदेशानुमत्येतिबोध्यं॥दूषणांतरंचाह॥जातिपक्षइति॥अप्रत्ययइत्यस्याविधीयमानार्थकत्वेतु
जातिपक्षप्राप्तस्यनिषेधोनस्यात् अनंतरस्येतिन्यायात् तस्यपर्युदासत्वाच्चेतिभावः प्रशस्तमितितथाचाणुदित्सूत्रेचग्रह
णमेवकार्यंहयवरट्सूत्रस्थमथकिमर्थमंतस्थानामणसूपदेशः क्रियतइतिभाष्यंत्वेकदेश्युक्तिरितिभावः॥ सवर्णस्यचे
ति॥ चकारस्यरादसवर्णस्यापीत्यर्थः स्यादित्यतआह॥ चोभिन्नक्रमइति॥ग्राहकसूत्रएवेति॥एतन्नियमपरेतपरसूत्रेपि
वोध्यं इतितुनयुक्तमिति॥तपरसूत्रेऽणपदानुवृत्तौतुयुक्तमेवैतत्॥अत्रपरेणाणग्रहणेउरऋदितितपरकरणंभाष्योक्तम
पिज्ञापकवोध्यं॥तदुपपादनप्रकारस्तुकौस्तुभप्रभायांबोध्यः॥नप्राप्नोतीति॥अत्रहेतुर्व्यक्तिपक्षेतत्रत्यातत्यव्यक्त्योर्भेदेनेत्येता
वानेवचारितार्थ्येनेत्यंतस्तुअणग्रहणसार्थक्यप्रदर्शनपरः॥नन्वाद्यवर्णेष्वपुरणित्यादौकथंग्रहणकशास्त्रप्रवृत्तिः॥व्यक्ति
पक्षेपाणिन्युच्चारितस्याक्षरसमाम्नायस्याभेदात् इत्यतआह॥णकारादिचिन्हेनेति॥नन्वादिरंत्येनेत्यत्रसहग्रहणात्समुदाय
स्यैवसंज्ञात्वं॥तथाचाणित्यत्राकारस्यनिरर्थकत्वात्कथंतत्राणुदित्सूत्रप्रवृत्तिरित्यतआह॥तत्रत्येति॥ननूपस्थितस्यानु

च्चारितत्वात्कथंप्रत्यायकत्वमतआह॥उच्चारिताभेदेनेति॥नन्वेवंचनकारादिचिन्हेनेतिपूर्वग्रंथोऽसंगतः॥अण्पदेनवर्णस
माम्नायस्यानामेवोपस्थितेः॥आद्यावर्णोपस्थितेरितितुअसंगतमनुपयुक्तंच॥तस्यनिरर्थकत्वेनानुपस्थापकत्वात्इतिचेन्न
प्रत्याहाराद्यवर्णेणकारादिचिन्हेनाक्षरसमाम्नायस्योभेदग्रहणंविनोच्चारिताद्यवर्णाभेदेनाक्षरसमाम्नायस्यस्यग्रहणासंभव
इत्याशयात्॥प्रकृतेरिति॥अस्यच्चावित्यादौदूषणांतरंचाह॥प्रत्याहारघटकेति॥तत्रहेतुमाह॥उच्चारितस्यैवेति॥अण्ग्रहणं
चेतिचेन्ननाज्झलावितिसूत्रसंग्रहः॥ननुऋऌवर्णयोः सावर्ण्येपिऋकारेणनऌकारग्रहणंविभिन्नजातित्वात्सावर्ण्यंतुहो
तृऌकारइत्यत्राकः सवर्णेदीर्घार्थंस्यादित्याशंक्याह॥ऋऌवर्णयोरिति॥ननुसमानजातित्वादेपोसावर्ण्याभावातहोतृऌकार
इत्यत्रसवर्णदीर्घोनस्यादित्यतआह॥एतद्व्यतिरिक्तेति॥तथाचसावर्ण्यमपिसमानजातित्वाव्यापकत्वात्समानजातित्वादे
पोनैवातिदिष्टमितिभावः॥ननुऋऌवर्णयोः सावर्ण्यस्याविधानेनपृथगनुबंधकरणेनकस्यानित्यत्वंज्ञाप्यमित्यतआह॥एथमि
ति॥अत्रपक्षेइतिपाठः व्यक्तिपक्षेइतितुअपपाठः॥अनन्वयात्॥तस्यसर्वस्येति॥संयोगांतलोपादेः॥शब्दबोध्योवर्णइतिइद
मयुक्तमुच्चारितस्यैवप्रत्यायकत्वात्॥इण्प्रत्याहारेप्लुतेचोऽघटकत्वापत्तौततः परस्यषत्वानापत्तेश्च॥भाष्यप्रामाण्यात्तपर

करणाच्चतात्परशब्दः स्वबोध्यसमकालग्राहकइतितूचितं॥ संख्याकृतव्यवहारस्येति॥ इदमयुक्तं॥आकडाराधिकारादन्य
त्रसंज्ञयोर्बाध्यबाधकभावाभावात्॥ नचस्वतोविरोधरहितयोस्तद्बहिर्भूतयोर्बाध्यबाधकभावेपिस्वतोविरुद्धयोस्तद्बहि
र्भूतयोरपिसोस्त्येवेतिवाच्यं॥ संकोचेमानाभावात्॥ किंचतपरः षण्णांसंज्ञा॥अणुत्वष्टादशानांसंज्ञेत्यनुक्त्यासवर्णग्राहकत्व
तात्कालिकसवर्णग्राहकत्वयोरविरोधेनचविप्रतिषेधशास्त्राप्रवृत्तिः॥एतेनगुणानामभेदकत्वेत्वनवकाशत्वाद्बाधइत्य
ग्रिमग्रंथोप्यपास्तः॥ तस्मादणुग्रहणानुवृत्यानियमार्थएवायंयुक्तः॥गोतोणिदित्यादौतुतकारोच्चारणसामर्थ्याद्धकारोवि
वक्षितः॥ सिद्धांतपक्षेपीति॥ इदंगुणानामभेदकत्वेत्वनवकाशत्वाद्बाधइतिपूर्वग्रंथेनविरुद्धं॥तत्रविधित्वमंगीकृत्या
नवकाशत्वाद्बाधोक्तेः॥ पंचमीसमासाभावेति॥ एओङ्·ऐऔजितिसूत्रेकिंदकारेप्रयोजनं॥अथकिंतकारेयद्यसंदेहार्थस्त
कारोदकारोपीतिभाष्यस्यपंचमीसमासतदभाववादिपरतयाकैयटेनयोजितत्वात्तदनुसारेणेदं॥नतुपंचमीसमासस्यपा
क्षिकत्वाभिप्रायेण॥ धकारस्थानिकइति॥ इदमप्ययुक्तं॥ दकारांशेपंचमीसमासानाश्रयणेनादोषात्॥त्रिमात्रचतुर्मा
त्रव्यावृत्तयइतियुक्तः पाठः॥ अन्यत्र विस्तरइति॥ इतिमंजूषादौविस्तरइत्यर्थः॥ वस्तुतस्तुपदपदार्थयोस्तादात्म्यमयु

त्तं॥वह्निरित्युक्तेमुखेदाहापत्तेः॥नचभेदाभेदयोरंगीकारेणोक्तदोषनिस्तारः॥भेदमात्रांगीकारेणोक्तदोषनिरसनोपप
त्तेःअभेदांगीकारेमानाभावात्॥रामेतिद्व्यक्षरंनामेतिलक्षणया।र्थपरं आदेदे चोवृत्थिपदाभिन्नाइतिवाक्यार्थइत्यप्ययुक्तं
तथ्यासतिशक्तिग्राहकत्वानुपपत्तेः॥अभेदस्यत्वयासंसर्गत्वानंगीकाराच्च॥तत्पदाभिन्नत्वेनतच्छक्यत्वानुमानात्॥परं
परस्याशक्तिग्राहकत्वमित्यपिन॥वृत्थिपदाभेदस्तद्वाच्यत्वयोःसहचारग्राहकमानाभावात्॥तयोर्व्याप्तिग्रहासंभवात्॥वृत्थि
सूत्रेभाष्येसाक्षात्संज्ञासंज्ञिभावस्यैववाक्यार्थत्वोक्तेश्च॥तद्भाष्यंचोपपादयिष्यामः॥तस्मादादेचोवृत्थिपदवाच्याइत्येववा
क्यार्थः॥आदेचांवृत्थिपदस्यचवाच्यवाचकभावस्यसंसर्गमर्यादयाभानांगीकारात्॥नचसमानविभक्तिकनामार्थयोरभेदे
नैवान्वयइतिव्युत्पत्तिभंगः॥प्रतीतपदार्थकतदर्थयोरभेदान्वयः॥अप्रतीतपदार्थकतद र्थयोस्तुवाच्यवाचकभावेनान्वय
इतिव्युत्पत्त्यंगीकारात्॥तदुक्तंभाष्ये॥इदंखल्वपिभूयःसमानाधिकरण्यंएकविभक्तिकत्वंचद्वयोश्चैतद्भवतिकयोर्विशेष
णविशेष्ययोर्वासंज्ञासंज्ञिनोर्वातत्रैतत्स्याद्विशेषणविशेष्यइतितच्चनद्वयोर्हिप्रतीतपदार्थकयोर्विशेष्यविशेषणभावोभ
वति॥नचादेच्छब्दःप्रतीतपदार्थकःतस्मात्संज्ञासंज्ञिनावेवेति॥वाच्यवाचकत्वेपीति॥सर्वार्थवाचकत्वेपीति॥सर्वस्यपा

दस्य सर्वत्रार्थे संकेतयितुमशक्यत्वादितिभावः॥ सामान्यतस्तथाज्ञानमिति॥ पटशब्दो जातिमद्वाचकः शब्दार्थस्य वाचक इ
त्येवंरूपेणशक्तिग्रहेपिघटपदेनघटत्वविशिष्टार्थाबोधात्॥ प्रकरणादिति॥ प्रकरणस्यस्वविषयविषयकशाब्दबोधे हेतुत्वा
त्॥ अन्यार्थाग्रहणमर्थसित्थं॥ अतएवष्डि॰ति॥ संपूर्णसंज्ञाशास्त्रोपस्थितेरेवेत्यर्थः॥ एतेनेति॥ उक्तभाष्यविरोधेनेत्यर्थः
भूवादयोधातवः॥ कालसंबंधाभावेनेति॥ तथाचकालपरिछिन्नत्वंक्रियात्वंतच्चसाक्षात्क्रियायामेवेतिकालाः परिमाणिने
तिप्राचीनग्रंथेषुस्फुटं॥ एतेननतावत्धात्वर्थत्वंक्रियात्वंक्रियावाचित्वेज्ञातेसतिधातुत्वज्ञानंधातुवाच्यत्वेचक्रियात्वंज्ञा
नमित्यन्योन्याश्रयात्॥ नापिलिंगसंख्याकारकानन्वयितत्निपातसंज्ञकवाशब्दार्थेपितत्सत्वेनोक्तदोषानिस्तारत्॥ नापि
साध्यतयाप्रतीयमानत्वं तत्॥ धात्वर्थेतयात्वस्यनिपातार्थेतदभावस्यचशपर्थैकनिर्णेयत्वादित्यपास्तं॥ साध्यत्वेनप्रतीयमा
नत्वस्यापिधात्वर्थमात्रवृत्तित्वसमर्थनसंभवाच्च॥ अभिव्याप्येति॥ आङोध्याहारइतिभावः॥ विप्रादिघटकेति॥ विपूर्वात्प्रापूरण
इत्यस्मात्कर्तरिक्विरूपमितिभावः॥ इत्यर्थबोधनायेति॥ अयंभावः॥ क्रियेतिलुप्ततृतीयांतं॥ योगइतिपदांतरस्याध्याहारः स्वो
श्चुनेत्यादिवत्॥ तथाचयोगपदंचअर्शआद्यजंतं॥ प्राद्यन्वयिधात्वर्थपरंविषयसप्तम्यंतं॥ तथाचक्रिययायुक्ताः प्रादयः स्वा

न्वयिक्रियाविषयेक्रियावाचकंप्रतिउपसर्गसंज्ञकाइति॥विगताःसेचकाइतिनिपातः॥अभेद्यविनसेति॥इदंप्राचामनुरोधेनस्व
मतेतदभावस्यवक्ष्यमाणत्वात्सांतग्रहणइति॥निसस्तपतावित्यादौ॥यत्रतुरुत्वमसित्धमिति॥रुत्वमसित्धमिति॥इदम
युक्तं॥इण्निष्ठायामितिसूत्रस्यभाष्यविरोधात्॥तथाहि॥इडित्यनुवर्तमानेपुनरिड्ग्रहणंकिमर्थंनित्यार्थमारंभः॥नैतदस्तिप्र
योजनं॥सित्धात्रविभाषानिरःकुषइत्यनेन॥तत्रारंभसामर्थ्यान्नित्योविधिर्भविष्यतिनात्रपूर्वेणविभाषाप्राप्नोतिकिंकारणंप
स्यविभाषेतिप्रतिषेधात्॥तत्रारंभसामर्थ्याद्विभाषालभ्येत॥पुनःपुनरिड्ग्रहणादिडेवेति॥इण्निष्ठायांतत्रयदुपाधेर्विभाषा
तदुपाधेःप्रतिषेधइतिभाष्यकृतासित्धांतितत्वात्॥निरःकुषोनिष्ठायायस्यविभाषेतिप्रतिषेधेपिनिसःकुषोनिष्ठायाइड्सं
भवेननिष्कुषितंनिष्कुष्टमितिरूपद्वयस्यसित्धौनात्रपूर्वेणविभाषाप्राप्नोतीतिभाष्यासंगतेः॥इड्ग्रहणेक्रियमाणेप्युक्तरी
त्येड्विकल्पापत्त्यापुनरिड्ग्रहणादिडेवेतिभाष्यासंगतिश्च॥उक्तरीत्याविकल्पप्राप्ताविण्निष्ठायामितिसूत्रवैयर्थ्यंच॥तस्मा
दिण्निष्ठायामितिसूत्रारंभसामर्थ्यादुक्तभाष्यप्रामाण्याच्चयत्ररुत्वस्यासित्धत्वंसित्धत्वंवातत्रसर्वत्ररांतग्रहणेसांतग्रहणंवा
र्थमेवेत्युक्तंतद्वैयर्थ्यंस्पष्टमेवेति॥ननुरेफांतदुर्पूर्वकात्स्याधातोःकुप्रत्ययेषत्वाभावघटितप्रयोगवारणायसुषामादिषुदुष्टुशब्दपा

वि० २५ ष्टइतिचेन्न॥अपस्पृधः शुल्कइतिन्यासेरेफांतस्यरोः सुपीतिनियमेनविसर्गाप्राप्त्यासांतपूर्वकात्स्पर्धातेरेवक्रुप्रत्ययविज्ञानेनादो
षात्॥श्रुतक्रमानुरोधादिति॥यद्यपिशब्दस्यविरम्यव्यापाराभावस्तथापिशाब्दबोधोत्तरकालिकोबोद्धृणांप्रतिपत्तिक्रमोप
मित्यदोषः॥व्यक्तिपक्षेतुलक्ष्यभेदेनलक्षणभेदात्क्वचित्किंचिल्लक्षणंविधिमुखेनप्रवर्त्ततेइतीष्टसिद्ध्यासूत्रंनकर्त्तव्यमि
तिकैयटोक्तमयुक्तमित्यभिप्रेत्याह॥जातिव्यक्तिपक्षयोरुभयोरपीति॥स्वंरूपंशब्दस्य॥कल्पितान्वयव्यतिरेकेति॥पदस्या
खंडत्वेनतत्रप्रकृतिप्रत्ययान्वयव्यतिरेकौकल्पिताविति भावः॥ईहल्यघोरिति॥नात्रशब्दस्यरूपग्रहणसंभवः॥तस्याकारासं
भवात्॥प्रकारतयाभासमानस्येति॥नसोऽस्तिप्रत्ययोलोकेयः शब्दानुगमादृतेइत्यभियुक्तोक्त्याग्रंथेशाब्दबोधेशब्दस्वरूपस्य
प्रकारतयाभानाभ्युपगमात्॥येनविधिः सर्वसंमतत्वादिति॥उपलक्षणमेतत्॥विधिरित्यस्यानन्वयापत्तेः॥अत्राधातोर्यतं
विधत्तइति॥अत्रचैत्रसमशीलोधातुःसंग्रामसमशीलश्चयत हस्त्यादिसमशीलः॥अत्रसेनापतिसमशीलश्चाचार्यः हस्त्यश्वा
दिभिर्विधत्तइत्यत्रसेनापतिःकर्त्ता॥तत्रयथाचैत्रस्यसंग्रामोत्पत्तौहस्त्यश्वादयः करणमेवंधातोर्यदुत्पन्नावच्चकरणं॥यत्रधा
तावंतेऽचूतत्रैवयतउत्पत्तेः॥भाष्येउदाहरणांतरंचदेवदत्तस्यसमाप्ताः शाखावैरोदनेनचयज्ञदत्तः प्रतिविधत्तइति॥अन्येनप्र

यस्मिन्परतः कार्यं तन्यस्येत्यस्याचा धातोर्विधिरित्यर्थः॥ नन्वन्येन चान्यस्येत्यनेन कार्यसंबंधिभिन्नस्यैव करणत्वसूचनेपि

स्याकरणत्वं कथं दर्शितं॥ नचान्यस्येति संबंधसामान्यषष्ठ्या धातुप्रातिपदिकयोः पंचम्यंतार्थयोरिव सप्तम्यंतार्थस्यापि संग्रहद्द

तिवाच्यं॥ अन्यस्येत्यस्योद्देश्यत्वार्थकषष्ठ्यंतत्वेन प्रत्ययविधौ पंचम्यंतार्थस्योद्देश्यत्वेन तेन तस्य संग्रहेपि सप्तम्यंतार्थस्या

संग्रहादित्यत आह अन्यस्मिन्नित्यस्यापीति॥ ननु सप्तम्यंतार्थस्याकरणत्वे एतदपवादो यस्मिन्विधिरित्यपि सप्तम्यंतेन प्रव

र्तेतेति चेन्न॥ सप्तम्यंतं विना तस्याविषयाभावात्॥ साक्षात्कार्यिनिमित्तस्य विशेष्यस्यैवाकरणबोधनात्च॥ अन्ये तु विधिरिति

कर्मणि किः तदंतस्येति संबंधिन उपादानन्तस्येत्यध्याहारः॥ तथा चायं सूत्रार्थः॥ यत्संबंधी यो विधिर्यत्कार्यं यत्करणकं तदं

तस्य तस्य बोध्यमिति॥ अचो यदिति धातुसंबंधी यद्विधिरच् करणक इति तदंतस्य धातोः संबंधी स बोध्यः॥ तदंतस्येति सं

बंधसामान्ये षष्ठ्यंतमिति प्रत्ययविधौ प्रकृतेरादेशविधौ स्थानिन आगमविधावागमिनः संग्रहः॥ तथा च देवदत्तस्य स

मापयं माणवैरोदनेन च यथा यज्ञदत्तः प्रतिविधत्ते॥ यथा धातोर्यतमचा प्रागाह्न विधत्ते॥ इको यणित्यादौ तु न तदंतविधिः

यत्संबंधी विधिर्यत्करणकं स तदंतस्य तस्येत्यनेन कार्यसंबंधिभिन्ने करण एव तदंतविधिः प्रवृत्ति तल्लाभात्॥ इदं च कार्यसंबंधि

व्यधिकरणविशेषणेकरणेनप्रवर्तते॥कार्यसंबंधिनःकरणत्वासंभवात्॥एवंयत्रकार्यसंबंधिनिसमानाधिकरणासत्त्वमसंभ
वी॥तत्रापिनतदंतविधिः॥एवंचतदंतस्येत्युक्तिबलात्॥समानाधिकरणविशेषणरूपमेवकरणंपर्यवस्यति॥तयोरकरण
त्वंदर्शितमितिमूलोक्तंतुनयुक्तं॥इकइत्यनेनानिकोचीत्यनेनहल्परकेकश्चव्यावृत्तिकरणत्वसंभवात्॥तत्रांतरंगत्वात्समा
नाधिकरणमेवेत्यपिन॥शब्दतोविशेषणमित्युक्तौत्वंतरंगत्वात्समानाधिकरणएवेतिकथंचिल्लभ्येत॥येनेतिशब्देनहिकरण
मेवात्रोपात्तम्॥अंतरंगत्वमपि॥अंतरंगत्वंचयत्रद्वयोर्ग्रहणासंभवः॥किंत्वन्यतरस्यैवतत्रह्यन्यतरस्यग्रहणंनियामकंप्रकृतेतु
द्वयोरपिग्रहणसंभवेनांतरंगत्वनियामकसकृदुच्चारितशब्दस्यैकार्थकत्वेपिप्रतिलक्ष्यंतस्यप्रवृत्तेः॥समानाधिकरणत्वेप्रायेण
तदंतविध्युत्तरकालिकसंभावनासमधिगम्यत्वाद्विशेषणत्वस्याचोयदित्यादेरनेकाच्स्वपिप्रवृत्तेः॥तदंतत्वेसंबंधित्वंचात्रपरंप
रयापिबोध्यं॥तेनोतश्चप्रत्ययादित्यत्रहेरेवसाक्षात्कार्यसंबंधित्वेप्यंगस्यपरंपरयातथात्वान्नदोषः॥एवंतथाविशेषणत्वयोग्य
तापीत्यसंगतं॥समानाधिकरणविशेषणत्वस्यतदंतविधिप्रयोजकतायाःसूत्रास्वरस्यसिद्धत्वादितिदिगित्याहुः॥तस्यपीतिपाठ्य
मिति॥ननुव्यपदेशिवद्भावेनसिद्धेरिदंव्यर्थमितिचेन्न॥वनोरचेत्यादौव्यपदेशिवद्भावाप्रवृत्तेः॥व्यपदेशिवद्भावोऽप्रातिप

दिकेनेतिनिषेधात्॥ गृह्यमाणप्रातिपदिकेति॥ ननु किमिदं गृह्यमाणत्वं॥ न तावदानुपूर्वीविशेषरूपेणोपादीयमानत्वं॥ अथ
कवृष्णिकुरुभ्यश्च वृत्या क्वस्तत्र जनपदतदवध्योश्च द्विगोष्ठश्चेत्यादीत दंत विधिनिषेधानापत्तेः नापि यथाकथंचिदुपादीयमा
नत्वं॥ उगिदूर्णग्रहणेष्वपि निषेधापत्तेः॥ नाप्युगिदूर्णग्रहणभिन्नत्वं॥ उगिदूर्णे इतित्वेकदेशानुवाद इत्युत्तरग्रंथासंगतेरिति चे
न्न॥ प्रातिपदिकत्वव्याप्यधर्मपुरस्कारेणोपादीयमानत्वमित्यर्थेनादोषात्॥ प्रत्ययग्रहणेति॥ सोप्येतन्मूल इतिभावः॥ वाचनिकः स
इत्यन्ये॥ विरामोवसानं॥ वर्णानां नित्यत्वादभावासंभवादाह॥ उच्चारणेति॥ वर्णवदिति॥ यावद्ब्रह्म विष्ठितं तावती वागिति श्रुत्या व
र्णानां सर्वदेशकालवृत्तित्वेन दैशिककालिकक्रियासंभवादितिभावः॥ परः सन्निकर्ष इति॥ वर्णादूर्णांतरोच्चारणेर्धमात्राकाल
व्यवायस्य नित्यत्वेन तदधिककालव्यवायरहितत्वमेव परः सन्निकर्ष इत्यभिप्रेत्याह स्वभावसिद्धेति। संहिताधिकार इति॥ तयोर्व्यवधिसंहिताप
मित्यधिकार इत्यर्थः॥ विषयभेद इति॥ इदमयुक्तं। तदुद्देश्यतावच्छेदकव्याप्योद्देश्यतावच्छेदकत्वं वाधकत्वे तंत्रं। मदुद्देश्यतावच्छेदकव्याप
कोद्देश्यतावच्छेदकत्वं च बाध्यत्वे तंत्रं॥ यथा द्वितीये काच् द्विर्वचनमुद्देश्यतावच्छेदकमजादिधातुत्वं प्रथमे काच् द्विर्वचनोद्देश्य
तावच्छेदकं धातुत्वमात्रं॥ न च तथा प्रकृते वसानसंज्ञोद्देश्यतावच्छेदकं वर्णोच्चारणाभावत्वं संहितासंज्ञोद्देश्यतावच्छेदकत्वं तु व

मिसर्वनामानीति सूत्रे भाष्ये तथा हि नेदं संज्ञाकरणं पाठविशेषणमिदं सर्वेषां यानि नामानि तानि सर्वादीनि संज्ञोपसर्जनेनेति विशेषणेष तिष्ठते॥ यद्येवं संज्ञाश्रयं यत्कार्यं तन्न सिध्यति॥ सर्वनाम्नः स्मै अन्वर्थग्रहणं तत्र विज्ञास्यते सर्वेषां यन्नाम तस्मादुत्तरस्य ङेः स्मैइति॥ यद्येवं सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति॥ एतेषां च शब्दानामेकैकस्य स्वविषय इति केपटश्चैतेषां चापीति॥ ततश्च सर्वस्मिन्नोदन इत्यादौ ओदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति सामानाधिकरण्यादनयोरिति॥ गौरी ब्राह्मणतरेति॥ नेदं परिनिष्ठितं किंतु ह्रस्वापादनाय कल्पितमलौकिकमेव परिनिष्ठितत्वे गौरीशब्दे पुंवद्भावापत्तेः॥ ननु घसंज्ञायां तदंतविध्यभावेपि प्रदेशेषु तदंतविधौ पुनरुक्तदोषतादवस्थ्यमित्याशंक्याह एतन्निषेधेति॥ इदमप्ययुक्तं॥ संज्ञाविधौ न तदंतविध्यभावे घरूपेत्यत्रापि न तदंतविधिः॥ हृदयस्य हृल्लेखेत्यत्राण्ग्रहणेन सप्तम्यंते प्रत्ययग्रहणे तदंतविध्यभावज्ञापनात् संज्ञाविधौ तदंतविधौ तु घरूपेत्यत्र पुनस्तदंतविधिर्दुर्वारः॥ सप्तम्यंत प्रत्ययग्रहणाभावे नोक्तनिषेधाप्रवृत्तेः किंच प्रगृह्यत्वस्य प्रत्ययाप्रत्ययसाधारणतया प्रदेशे तदंतविध्यभावेनेदूदेत् द्विवचनमित्यादौ संज्ञाविधाविति निषेधश्चरितार्थ इति क्व सामर्थ्यमित्येषा दिक्॥ इत्याद्यनुवृत्तेरिति॥ यद्यपि तदंतां प्राप्रवृत्तावपि प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादौ त्युपतिष्ठत इति परिभाषाबलेनापि पदसमुदाय

कि० स्यपदत्वं वारयितुं शक्यं॥ तथाप्यनुवृत्यापि निर्वाह प्रदर्शनपरमेतत्॥ सर्वस्य द्वे इति सूत्रे कैयटेप्येवमेवोक्तं॥ ननु इयानित्यत्रैकदे
९७ शाविकृतन्यायेनस्यानिवद्भावेनवा प्रातिपदिकत्वंसुलभमत आह अतएवेति॥ इदं सर्वमयुक्तं॥ प्रकृतिसत्वघटितस्य यस्माद्वि
हितस्तदादित्वस्य व्यपदेशिवद्भावासाध्यत्वात्॥ अवयवत्वेच तद्व्याप्यांतत्वादित्वव्यवहारमात्रस्य तदतिदेशासाध्यत्वात्॥ अत
एवासिद्धवत्सूत्रे भाष्ये प्रस्तनप्यगत इत्यादावल्लोपस्यासिद्धत्वादयादेशाभावमाशंक्य व्याश्रयत्वेन समाहितं॥ त्वद्रीत्या त्वसिद्ध
त्वेपि स्वात्मगतलघुपूर्वत्वमादायायादेशासिद्ध्यातदसंगतिः॥ अतएव च हरिशब्देनादृतत्वं॥ नन्वेवं पूर्वादिनिः सपूर्वाच्चेति सिद्धे
योगविभागो व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषाज्ञापनार्थ इत्याकरासंगतिरिति चेन्न॥ सपूर्वादिति पूर्वशब्दस्य पूर्वावय
ववाचित्वात् सपूर्वादित्यस्य प्रातिपदिकविशेषणत्वात्॥ एवमेकगोपूर्वादित्यत्रापि॥ पूर्वादित्यस्य सामर्थ्यात्पूर्वातादित्यर्थः॥ अ
न्यथाव्यस्तेप्यापत्तेः॥ इयन्मात्रमित्यादौत्वंतरंगानपि विधीन्बहिरंगो लुग्बाधत इति न्यायेन यस्येति लोपं बाधित्वा पूर्वं मात्रच्प्रत्य
यस्ततोलोप इति न कश्चिद्दोषः॥ एवमस्यापत्यमिरेर्युवापत्यमायान इत्यादौ य ञिञोश्चेति फक्सिद्धिरपि बोध्या॥ नन्वस्यमा
त्रचः फकश्चांतरंगनिमित्तविनाशकलुक्प्रयोजकत्वाभाव इति चेत्सत्यं॥ प्रक्रियायामुपसर्गसमानाकार इत्येतद्व्याख्यावसरे य

स्माद्विहित इत्यनेनाधिकव्यावृत्तिरेव न तु न्यूनव्यावृत्तिरिति शेखरोक्तैकदेशोक्तस्थलेषु दोषाभावात्॥ नन्वेवं हरिष्वित्यादौ सोः पदत्वापत्तिः॥ हलि सर्वेषामिति निर्देशेन सात्पदाद्योरित्यत्र सातिग्रहणेन चाधिकस्य यस्माद्विहितस्तदादेः संग्रहसंभवे न्यूनस्यापि व्यावृत्तिकल्पनात्॥ सुमनायत इत्यादौ तु पृथक्करणेन स्वादेः कण्ड्वादिप्रकृतिघटकत्वासंभवादधिकस्य संग्राह्यत्वासंभवेन न्यूनव्यावृत्त्यभावः॥ एतेन न्यतिस इत्यादौ तिङ्ङतिङ इति निघातो व्याख्यातः असेत्यस्य स्थाने से इत्यादेशाकल्पनाद्वाऽर्थवत एवादेशत्वादभावस्यानर्थकत्वेनादेशत्वासंभवात्॥ हरिष्वित्यादावेकस्मिन्नित्यस्याभावेऽपि सोः पदत्वमुक्तरीत्या वारयितुं शक्यमित्येकस्मिन्निति व्यर्थमिति चेत् न॥ समासन्त्यपनशब्दस्य वृत्त्यत्वाभावाय दरिद्रातेरिवर्णान्तत्वाभावाय च तदावश्यकत्वात्॥ स सहाये इति॥ असहायत्वं च मुख्यव्यपदेशाभागघटकत्वं॥ नन्वेवं कुंभकारेभ्य इत्यादौ कृन्मेजन्त इति सूत्रे भाष्येऽसहायत्वमापाद्य सन्निपातपरिभाषया समाहितं॥ तदेतदसंगतं॥ एकारस्य मुख्यैजन्तत्वव्यपदेशाभागघटकत्वमिति चेन्न॥ कृत्त्वसमानाधिकरणमुख्यैजन्तत्वव्यपदेशाभागघटकत्वेनासहायत्वस्योपपादत्वात्॥ अत एव खट्वे इत्यादौ व्यपदेशिवद्भावेन द्विवचनस्यैदन्तत्वात्प्रगृह्यत्वं॥ द्विवचनत्वसमानाधिकरणैदन्तत्वं व्यपदेशाभागघटकत्वस्य तत्र सत्त्वात्॥ एतेन निजौ चत्वार एकाच इति भाष्यमपि

योजितंवेदितव्यम् ॥ धात्ववयत्वविशिष्टैकाच्त्वव्यपदेशस्यनिजावप्यमुख्यत्वेनतद्घटकेकारेमुख्यधात्ववयवत्वविशिष्टैकाच्
त्वव्यपदेशाभागघटकत्वस्यसत्वात् ॥ ध्वनितंचेदमिति ॥ ससहायेव्यपदेशिवद्भावाप्रवृत्तिरित्येतत्क्रमेयमित्यर्थः ॥ असहायएवे
ति ॥ यद्यपीयायेत्यादावपिप्रत्ययःसहायोस्त्येवतथापिप्रकृतिघटकःस्वसजातीयःसहायोनास्ति ॥ एतावतैवासहायत्वमप
देशः ॥ एकाकीहयमारुह्यजगामेत्यादौविजातीयहयरूपसहायसत्वेपितथाव्यपदेशदर्शनात् ॥ तथाचार्थवताव्यपदेशइत्यत्रा
र्थवत्पदमर्थवत्सहचरितासहायत्वेलाक्षणिकमितिभावः ॥ हलोनंतराः ॥ नन्वानंतर्यस्योपलक्षणत्वेएकस्यापिहलोहलंतरानंतर्यो
पलक्षितस्यस्यादेवसंज्ञा । उपलक्षणत्वंचसंज्ञिकोट्यप्रविष्टेसतिसंज्ञिव्यावर्तकमित्याशंक्याहविशेषणतायाएवेति ॥ विशेषण
त्वंचसंज्ञिकोटिप्रविष्टत्वं ॥ यथोक्तंमधुसूदनेन ॥ सर्पज्ञानस्यभयकंपादिजनकत्वेसर्पस्यापितज्जनकत्वं ॥ सर्पादेर्ज्ञानविशेषण
त्वसंभवेउपलक्षणत्वायोगादिति ॥ तत्रोपलक्षणत्वंचभयादिजनकव्यावर्तकत्वेतिभयादिजनककोट्यप्रविष्टकत्वं ॥ वस्तुतस्त्वे
तदनंतरोब्राह्मणोभोज्यतामित्युक्तेआनंतर्यस्यतत्प्रतियोगिनश्चकार्यान्वयादर्शनात् ॥ आनंतर्यविषयविषयिभावस्वस्वामिभा
वादिप्रतियोगिनामुपलक्षणत्वमेव ॥ यत्रहिविशेषणत्वोपलक्षणत्वयोर्दर्शनंतत्रविशेषणत्वमेवन्याय्यमितिन्यायविदः ॥ नहि

आनंतर्यादिप्रतियोगिनां विशेषणत्वं कुत्रापि तान्त्रिकानां संमतं॥ एतेन सर्पादेर्भयजनकत्वोक्तिरप्यपास्ता॥ अनुत्पन्नत्वेनेति॥ इद
मप्ययुक्तं॥ व्रीहयः संयुज्यंते यत्र राशावित्यादावुक्तनियमव्यभिचारात्॥ यद्यपि घटपटौ संयुज्येते यत्रेत्यत्र घटपटातिरिक्तस्यैवा
न्यपदार्थतया प्रतीतिः॥ व्रीहयः संयुज्यंते यत्रेत्यत्र व्रीहीणामेव तथा प्रतीतिस्तथापि प्रकृते हलां विशेष्यत्वेन व्रीहयः संयुज्यंते यत्रेति
वदेव व्यवस्था युक्ता॥ तद्घटितेति॥ हलन्तस्योक्तव्युत्पत्त्यनुरोधे न हल्पदं तद्घटिते लाक्षणिकं स्यादिति भावः॥ हलौ च हलश्चेति॥
स्वरितात्संहितायामिति सूत्रस्य भाष्यप्रमाण्येन द्विवचनबहुवचनांतयोरेकशेषः शिष्यमाणं च द्वित्वविशिष्टहलोर्बहुत्वविशिष्ट
हलां च बोधकमिति भावः॥ फलाभावादिति॥ भूयादित्यत्र तु स्कोरिति सुटो निवृत्तौ पश्चात्तेनैव यासुटस्सस्य निवृत्तिरिति भावः॥ इदम
प्ययुक्तं॥ मंक्तेत्यादौ संयोगादिलोपानापत्तेः॥ अंत्यात्पूर्वो मस्जेर्मिदिति वार्तिके नजकारात्पूर्वं नुम्प्रवृत्तेः॥ न च जकारे झलि परतो
द्वयोः संयोगमाश्रित्य सलोपः सुलभः॥ सडित्यधिकारेण झलादौ प्रत्यय एव तत्प्रवृत्तेः॥ भूयास्तामित्यादौ तु द्वयोः सकारयोः श्रवण
मिष्टमेव एवं च सति स्त्र्यादिषु वर्णेषु संयुक्तेष्वित्याद्यभियुक्तव्यवहारोऽपि संगच्छते इत्येषा दिक्॥ इति सूचितेति॥ अभिरित्युक्ता
वृक्प्रत्याहारसंज्ञापत्तिरिति भावः॥ वस्तुतस्त्वल्याचूतर्ं नाज्झलावजीदीगुणवचनादेवोकालोक्तस्वोपदेशेऽजनुनेत्यादि

वि॰
१९

निर्द्देशेनाच्छदेनपदांतेकुत्वाभावकल्पनेनादोषात्॥ सुप्प्रत्ययपरत्वेस्तुकुत्वंभवत्येव॥ अक्ष्वितिभाष्यप्रयोगात्॥ अतएवा
चः संधिग्रहणेनग्रहणमच्कार्याणियथास्युरित्यादयोभाष्यकाराणामभियुक्तानांचप्रयोगाउपपद्यंते॥ तितउदेवेति॥ इदंप्रत्ये
कंसंज्ञापक्षेसमुदायेसंयोगसंज्ञायांतुवाक्येसंहितायाअविक्षायांतितउआगच्छेत्युदाहर्तव्यम्॥ नचसंहितायाअविवक्षायांसन्नि
कर्षाभावइतिवाच्यं॥ एवमपितितओइतीत्युदाहरणसंभवात्॥ अत्रहिसंबुद्धौशाकल्यस्येतिप्रगृह्यत्वं॥ लोपसंज्ञेति॥ यद्य
पिलोपसंज्ञाएतत्तदोरेरीत्यादिसंधिकार्योपयोगिनीलोपसंज्ञा॥ यदिचसंधिकार्यैकार्यितयानिमित्ततयावानोपयोगिनीसासं
ज्ञेतिब्रूषेतर्हिवृध्दिसंज्ञापिनतथेतिवक्तव्याभवतिचसोचिसोपेचेतद्वलोपइत्यनयोर्लोपसंज्ञापिनिमित्ततयोपयोगिनी॥ किं
चलघुसंज्ञानकथंचिदपिसंधिकार्योपयोगिनी॥ यदिचगुरुसंज्ञाबाध्यतयातदुपन्यासः तर्हिपदसंज्ञाबाधकतयाभसंज्ञाप्युप
न्यस्यतां॥ किंचस्वादिष्वितिपदसंज्ञापिमाभ्यामित्यादौसंधिकार्योपयोगिनीतितदनुपन्यासान्न्यूनता॥ एवंटिसंज्ञायाअनुपन्यासे
नापिन्यूनता॥ एवंनिपातसंज्ञापिनसंधिकार्योपयोगिनीतिसापिनवक्तव्यास्यात्॥ एवंसंप्रसारणसंज्ञासंप्रसारणाच्चेतिसंधिकार्यो
पयोगिनीतिवक्तव्यातथापिप्रायेणसंधिकार्योपयोगिनीनांसंज्ञानांप्रकरणंप्रायेणसमाप्तमित्यर्थान्नकश्चिद्दोषः॥ शेखरोक्तविषे

यणेतुव्यर्थएवातद्धानेप्यननुगमादितिसर्वेष्टसिद्धिः॥ ॥इतिविषमपदविवृतौशेखरव्याख्यायांसंज्ञाप्रकरणं॥इकोगुण॥ सं
ज्ञाकरणेनेति॥वृद्धिरादैजितिसूत्रेऽदेङ्गुणइतिसूत्रे चवृद्धिगुणसंज्ञयोः संज्ञिविशेषेसंकेतकरणेनान्यत्रोच्चारिताभ्यांताभ्यांसं
ज्ञिनएवप्रतीते रित्यर्थः॥पूर्वसंज्ञाशास्त्राप्रणयनात्॥संज्ञासूत्रेसंज्ञाशब्दस्यशब्दस्वरूपपरत्वेपिततोन्यत्रसंज्ञित्वमेव॥संज्ञि
विशेषेततःपूर्वशक्तिग्रहात्॥तदप्यनुवर्त्यतेति॥गुणवृद्धिग्रहणमनुवर्त्यतेत्यर्थः॥अनुवर्तमानंचशब्दस्वरूपपरमर्थाधिकारानुरो
धादितिभावः॥पूर्वगृहीतशक्तिकस्यनशब्दस्वरूपपरत्वंकिंतुयत्रार्थसंकेतस्तत्परत्वमेवेतिनियमादिदमप्ययुक्तमित्याशंक्य
सनियमोप्यसिद्धइत्याह स्वादिष्विति॥नियमस्तुसंज्ञाशास्त्रायत्रसंज्ञापदमनुवर्ततेतद्भिन्न स्थलएवेतिभावः॥ननुसंज्ञासूत्रादनु
वर्तमानसंज्ञापदस्यार्थाधिकारानुरोधाच्छब्दस्वरूपपरत्वांगीकारेष्णांतेतिसूत्रेऽनुवर्त्तमानसंख्यापदस्यापितथात्वापत्तिरित्याशं
क्याह।ष्णांतेति।इतिवार्थादिति।इतिवार्थादितियुक्तःपाठः।आद्यस्योदाहरणंविभाषायइतिअन्त्यस्योदाहरणंविभाषादिक्समासेइतितत्रहिदि
क्शब्देनदिग्वाचकशब्दाननूद्यविहितसमासस्यैवग्रहणंप्रकृतेतुमिदेर्गुणइत्यादावपिगुणशब्देनगुणसंज्ञकाननूद्यनकश्चिद्विहितइतिन
प्रतिपदोक्तपरिभाषावसरइतिभावः॥ननुलाक्षणिकत्वंविलंबोपस्थितिकत्वंप्रतिपदोक्तस्यत्वंचझटित्युपस्थितिकत्वंतत्पदादीनामइ

वि० २० तिचनझटित्युपस्थितिर्कगुणशब्देनाकारादेरविधानादित्युक्तपरिभाषयैवोक्तार्थिकयानिर्वाहेतस्याभवदुक्तार्थोनोचितइत्याशं
क्याह॥ ध्वनितंचेति॥ तत्रचेत्यंभाष्यंसंज्ञाविधानेनियमः संज्ञयायेविधीयंतेतेषुनियमः किंवक्तव्यमेतत् नहिकथमनुच्यमानंगं
स्यतेगुणवृद्धिग्रहणसामर्थ्यात्तथाचद्यौः पंथाः सइममित्यादौनदोषइति॥ यदिचोक्तपरिभाषयानिर्वाहः स्यात्तदासंज्ञयाविधाने
इत्युक्तप्रकारोऽनर्थकः स्यात्तेनमन्यामहेलक्षणप्रतिपदोक्तयोर्मदुक्तएवार्थोभाष्यकृतोभिप्रेतइति॥ तदाहेति॥ गुणवृद्धिश
ब्दाभ्यांयत्रगुणवृद्धीविधीयेतेइत्यस्यगुणवृद्धीभवतइत्यर्थकेगुणवृद्धिपदेयत्रश्रूयेतेइत्यर्थइतिभावः॥ एवमचश्चेत्यत्राप्यज
भवतीत्यर्थकानिह्रस्वदीर्घपदानियत्रश्रूयंतेइत्यर्थः॥ एतेनगुणवृद्ध्योर्लक्ष्येविधानेनतत्रेक्पदोपस्थितिः स्यादित्यपास्तं॥ अ
तएवेति॥ तथाचभवंतिप्यालीयइत्यादौचनदोषः॥ अन्यथाएधेऽग्नोपगवीयइत्यादावेवतोस्यातामितिभावः॥ इत्यपास्तमिति॥ न
न्वतोगुणइत्यत्रगुणइति प्रथमांतंपदंनश्रूयतइतिनदोषइतिचेन्न॥ वृद्ध्यंशएवदोषइत्यभिप्रायात्॥ प्रत्ययस्यादिति
आपिपरेइदंककारस्यविशेषणमितिभावः॥ तदंतस्येति॥ वृद्धिर्यस्येत्यादौतुयच्छब्दसमभिव्याहारात्तद्वृद्ध मितिविधेयनिर्देशा
च्चवृद्धिपदस्यप्रथमांतत्वेपिनविधेयसमर्पकत्वनिर्णयइति॥ एतेनगुणवृद्ध्योर्विधेयत्वस्यवाक्यार्थबोधोत्तरकालिकत्वेनतदुत्तर

मेवास्योपस्थित्याऽलोंत्यस्येत्यस्यापितदुत्तरमेवोपस्थित्यातस्यानेनबाधःस्यादित्यपास्तं॥वाक्यार्थबोधात्पूर्वमपियच्छब्दासमभिव्या
हृ तप्रथमांतत्वेनमिदेर्गुणइत्यादौगुणपदस्यविधेयसमर्पकनिश्चयसंभवेनास्यालोंत्यपरिभाषातःपूर्वमेवप्रवृत्तेःआद्यंतौ॥सूत्रा
रंभसामर्थ्यादिति॥नचहलोय मामित्यादौतच्चरितार्थं॥लोकेउपस्थितिक्रमेणान्वयस्यक्लृप्ततयातेनैवनिर्वाहात्॥संज्ञयानिर्द्देशेषु
लोकन्यायेनसिद्धेर्यथासंख्यसूत्रेभाष्येउक्तत्वेनसंज्ञयाद्वंद्वेनचनिर्द्देशेएतत्सूत्रारंभसामर्थ्येनैवक्रमेणान्वयस्यवक्तव्यत्वात्॥लोके
त्वेवमिति॥समूहयोरन्वयबोधोत्तरंपुनःप्रत्येकान्वयविवक्षयाप्रयोगोऽसाधुरितिभावः॥तथाचतीर्णदग्धाब्धिलंकइतिप्रयोगोऽसा
धुरितिकेचित्॥अन्येत्वत्राजाविधनौदेवदत्तयज्ञदत्तावित्युक्तेर्नज्ञायतेकस्याजाधनंकस्यावयइतिभाष्यस्वरसात्द्वंद्वगर्भवहुव्री
ह्यर्थस्यसमूहस्यद्वंद्वार्थसमूहेनान्वयोत्तरंनप्रत्येकमन्वयः॥परस्यद्वंद्वार्थयोस्तुप्रत्येकमन्वयोभवत्येवेत्याहुः॥भाष्येस्पष्टमिति॥
तथाचभाष्यंयद्यपितावल्लोकेएषदृष्टांतोदृष्टांतस्यापिपुरुषारंभोनिवर्त्तकोभवतिकःसंख्यातानुदेशोनामेति॥परत्वादिति॥इदम
युक्तं॥प्रत्ययःपरश्चेत्यस्यपदैकवाक्यतयान्वयस्यवक्ष्यमाणत्वेनवाक्यार्थबोधात्पूर्वमेवप्रवृत्तेः॥अस्यचटकितौयमुद्दिश्यविहितौ
तदाद्यंतौभवतइत्यर्थेनवाक्यार्थबोधोत्तरमेवप्रवृत्तेरुभयोर्यौगप द्याभावात्॥यथासंख्यंसिद्धमिति॥ननुगुणानांचपरार्थत्वादसं

बंधः समत्वाच्चस्यादितिन्यायविरोधइतिचेन्न॥ एतत्सूत्रभाष्यप्रामाण्येनोभयनिर्देशे पंचमीनिर्देशोबलवान्परत्वादितितत्रतत्रभा
ष्योक्त्याऽदेः परस्येतिसूत्रेऽपवादविप्रतिषेधात्सर्वादेशोभविष्यतीतिभाष्येणचतन्न्यायस्येतच्छास्त्रेऽनाश्रयणबोधनात्॥ अतएवोरण्
रपरइग्यणः संप्रसारणमित्यादौषष्ठीस्थानेइत्यादेः प्रवृत्तिः॥ पर्यायेणेति॥ इदमप्ययुक्तं॥ इतावित्यस्याभावेटकावाद्यंतौभवतइत्यर्थेऽ
नुबंधविनिर्मुक्तपदार्थोपस्थितेः स्वसित्थांतत्वेनाद्यवयवत्वस्यैवापत्तेः॥ इडादौटकारोच्चारणसामर्थ्येनेत्संज्ञकटकारादिसंबंधिन
ष्टकारांतस्यवाऽदित्वादिबोधनंतुक्लिष्टमितीत्ग्रहणंसार्थकमितिबोध्यम्॥ मिदचोंत्यात्॥ निर्देशादिति॥ उपलक्षणमेतत्श्नमोमि
त्वस्य॥ सौत्रमेकवचनमिति॥ कारकेइत्यत्रनिर्धारणसप्तम्यंतत्वेकारकेष्वितिवदेदितिभाष्येणनिर्धारणार्थकविभक्तेर्बहुवचनरू
पायाएवविभक्तेः साधुत्वबोधनादितिभावः॥ इतिभाष्यमिति॥ मिदचोंत्यादितिसूत्रस्थमितिशेषः॥ परिभाषाणामिति॥ इदमप्ययुक्तं।
अलोंत्यस्यादेः परस्येत्येतयोरनियामकत्वात्॥ तयोरभावेइत्यस्यानंत्यस्यादेरनादेश्चाप्राप्तेः॥ संदेहेऽनियमः॥ नचावयवषष्ठ्यादिषु
संदेहइतिप्रकृतसूत्रस्थंभाष्यंतुसामान्येनार्थोपदेशस्यसंशयस्थलएवप्रवृत्तिरित्यभिप्रायकं॥ लौकिकोयंदृष्टांतः॥ तद्यथालोकेक
श्चित्कंचित्पृच्छतिग्रामांतरंगमिष्यामिपंथानंमेभवानुपदिशत्वितिसतस्माआचष्टेऽमुष्मिन्नवकाशेहस्तदक्षिणोगृहीतव्यइतिपस्त

त्रतिर्यकथोभवतिनतत्रसंदेहइतिनासावुपतिष्ठतेएवमिहापिसंदेहेनियमइतिभाष्येणतथैवलाभात्॥यद्यपाक्षिकप्राप्तिकबाधे
नोपपत्तौनियतप्राप्तिकबाधोनन्याय्यइत्यभिप्रायकंभाष्यं॥निपातनात्साधुत्वस्येति॥स्थानत्वस्यैवसंबंधत्वेतुस्थानेयोगोऽस्याइ
तिवद्देदितिभावः॥संबंधस्यप्रतियोगिता नुयोगितान्यतरसंबंधेनद्विष्टत्वनियमात्स्थानस्यचातथात्वादितिभावः॥दर्भाणांस्थाने
इति॥इष्टिविशेषेइदम्॥शाणश्वस्थूलास्तृणविशेषाः ॥प्रस्तरोमुष्टिविशेषः॥किंचेति॥अस्मिन्पक्षेशब्दानित्य
त्वंरेखागवयन्यायेनसमाधेयं॥तृज्वत्क्रोष्टुरिति॥यद्यपिनात्रस्थानषष्ठीतथापिवर्तिंविहायप्रथमायाःषष्ठ्यर्थत्वमंगीकृत्यक्रो
ष्टुशब्द स्थानेतृजंतआदेशइत्यभिप्रेत्येदं॥इतिशब्दइति॥इदमयुक्तं॥इतिशब्दस्यस्वसमभिव्याहृतपदेपदार्थविपर्यासकारित्वं
स्वभावेनतुतद्बोध्यस्यशब्दस्यार्थपरत्वव्यवस्थापनं॥तस्मादितिशब्दःकार्यिकार्योभयस्यापकोनिपातानामनेकार्थत्वात्॥तच्छ
ब्दःसप्तम्यंतार्थपरामर्शकः॥तथाचसप्तम्यंतार्थोपश्लिष्टस्यकार्यिणोयत्कार्यमितितस्मिन्नितीत्यस्यार्थः॥निर्दिष्टइत्यादेश्चस
प्तम्यंतार्थव्यवहितोच्चारितेपूर्वस्यलद्बोध्यमित्यर्थः॥एवंतस्मादित्यस्याप्यर्थोबोध्यः॥यद्वेतिशब्दःप्रकारेएवंप्रकारेणवर्त्तमानंका
र्थमिति॥अर्थोलिंगमिति॥नतुस्वरूपसतीसप्तमीपंचमीचनिमित्तं।यस्मिन्विधिरित्यादेस्तुस्वरूपसतीसप्तमीनिमित्तं॥तेननेद्व

शीत्यादौतदुपस्थितिः॥एतदुपस्थितिश्च ॥उपपदविभक्तेरितिकारकविभक्तिसंभवेउपपदविभक्तिर्नन्याय्येत्यपितन्न्यायार्थ
इतिभावः॥वोत्थमिति॥वर्णानांसर्वदेशकालवृत्तित्वादितिभावः॥इयमेवेति॥औपश्लेषिकेऽधिकरणेसप्तम्येवेत्यर्थः॥ननुप्रत्ययःपरश्च
गाङ्कुटादिभ्यइत्यत्रदावंशविशेषविकलपरिभाषोपस्थितौपरिभाषांनियमत्वंनसंभवति॥प्रत्ययार्थान्वितप्रकृत्यर्थाबोधासंभवेन
षष्ठ्यर्थाद्यंशविकलनियमशरीरस्योपपादयितुमशक्यत्वादुक्तविषयद्वयेपरिभाषायांनियामकत्वासंभवादित्यतआह॥परिभाषाणा
मिति॥यद्वापतिःसमासएवेत्यादिनियमाविषयेहरिशब्दादौचरितार्थायाघिसंज्ञायाःपतिशब्देतेननियमउपपद्यते॥प्रकृतेतुतस्मि
न्निति परिभाषार्थंविनाइकोयणित्यादीनांवाक्यार्थबोधमात्रेणलक्ष्यसंस्कारकत्वमेवनेतिकथंनियामकत्वमित्यतआह॥परिभाषा
णामिति॥अथवासाक्षाल्लक्ष्यसंस्कारकयोःशेषोघ्यसखिपतिःसमासइत्यनयोर्भवतुनियम्यनियामकभावःपरिभाषाणांतुविधिवाक्यै
नसहवाक्यार्थबोधमंतरानलक्ष्यसंस्कारकत्वमितिननियामकत्वसंभवइत्यतआह॥परिभाषाणामिति॥यद्वापरिभाषाणामंगत्वेनांगी
भूतप्रधानविधिसंकोचकत्वेलक्षणनियामकत्वासंभवइत्यतआह॥परिभाषाणामिति॥अलोंत्य॥ऋकारात्पूर्वइति॥आद्यंतौटकिता
वलोंत्येत्यनयोःसमावेशःस्यादितिभावः॥नियमद्वयमिति॥इदमयुक्तंसिद्धेसत्यारंभाभावात्॥अन्येत्वनेकाल्शित्सर्वस्येस्यस्यारंभ

सामर्थ्यादेकालादेशस्यस्थानषष्ठीनिर्दिष्टावयवस्थानकत्वंकल्पयित्वानियामकत्वंवर्णयंति॥ तन्नयुक्तम्॥ इतः पूर्वंनियमेनाने
कालित्यस्यवाक्यार्थबोधकल्पनेतद्वैयर्थ्यमूलकोक्तार्थकल्पनेचातिगौरवेणलघुभूतविधित्वस्यौचित्यात्परिभाषाणामनियमेनि
यमकारिणीत्वमपवादस्तुयदिपरिभाषात्वसमानाधिकरण्येनतदोमितिब्रूमः॥ यदितदवच्छेदेनतदुक्तिस्तदानिर्युक्तिकः प्रवादोन
प्रेमवद्भिरादर्त्तव्यइतिब्रूमः॥ परस्येत्यावर्ततइति॥ इदमप्ययुक्तं॥ विभाषादिक्समासइत्यादाविवपरशब्देमपरत्वबोधकशब्देन
वापरस्ययद्विहितंतत्रैवैतत्प्रवृत्त्याऽवृत्तिवैयर्थ्यात्॥ तस्मात्परस्येतिलघुन्याससंभवात्तस्मादित्युत्तरस्येतिन्यासाभिप्रायेणेदंकथं
चिद्योज्यं॥ भूतपूर्वानेकाल्त्वमादायेत्युक्तमुपपादयतिविधाविति॥ ननुकिमिदंविधौनिर्दिष्टत्वंनतावदनेकाल्पदबोध्यत्वं॥ ख
रवसानयोर्विसर्जनीयइत्यादिविहितविसर्जनीयलोपानुनासिकोदात्तादीनामपिसर्वादेशत्वापत्तेः॥ नापिइशादिपदजन्यप्राथमि
कोपस्थितिविषयत्वंतथासतिसानुबंधस्यैवविधेयत्वापत्तेः॥ पदार्थोपस्थितिशाब्दबोधयोः समानविषयकत्वेनैवकार्यकारणभावा
दितिचेन्न॥ द्वितीयपक्षांगीकारेणादोषात्॥ नचतत्पक्षोक्तदोषःगंगायांघोषइत्यादावपिगंगापदेनप्रथमोपस्थितप्रवाहस्यशाब्दबोधेभा
नवारणायशाब्दबोधस्यप्राथमिकपदार्थोपस्थित्यासमानविषयकत्वानंगीकारात्॥ यदिचप्रवाहोपस्थितिर्नशाब्दबोधकारणंयाच

कारणंतीरोपस्थितिःसाधुशब्देसाधुशब्दबोधेनसमानविषयैवेतिब्रूषेतर्हिप्रकृतेपियासानुबंधकोपस्थितिर्नसाधुशब्दबोधकारणंयाच
कारणंसाऽनुबंधविनिर्मुक्तविषयिणीपदार्थोपस्थितिरनुबंधविनिर्मुक्तस्यैवेतिग्रंथोपिशब्दबोधकारणोपस्थितिपरइतिसमा
नंतदेतदभिप्रेत्याह॥उद्देश्यत्वविधेयत्वाविषयतयेति॥धान्येनधनवा नित्यादिवत्प्रकृत्यादिभ्यइत्यभेदेतृतीया।शित्वस्य
प्रयोजनांतरमाशंक्यनिराकरोतिघ्वसोरिति॥नन्वनुबंधानामनेकांतत्वेइशादेरनेकाल्त्वाभावेनसर्वादेशत्वासिद्ध्याशिदितिसार्थक
मित्याशंक्याह॥अनुबंधानामिति॥ज्ञापनेनेति॥ननुज्ञापितेपिशकारोच्चारणसामर्थ्यादनुबंधकृतमप्यनेकाल्त्वमादायसर्वादेशत्वं
भविष्यतीतिपुनःशिद्ग्रहणंव्यर्थमितिचेन्न॥अनुबंधकृताऽनेकाल्त्वस्यसर्वादेशत्वंप्रयोजकत्वेसिद्धेशकारोच्चारणसामर्थ्येनाद्यादे
शत्वस्यापिकल्पनापत्तेः॥इत्संज्ञकशकारस्याद्यादेशत्वेसर्वादेशत्वेचनिमित्तत्वाभावविशेषादितिदिक्॥इत्यादीनामिति॥आदिप
देनार्वणस्तृसस्जुषोरुरित्यादेःसंग्रहः॥एतेनेतिशेस्सिआदेःपरस्येत्यस्यप्राप्तत्वेनेत्यर्थः॥इतिपरिभाषेति॥ननूरण्रपरोयथासंख्य
मित्यादिपरिभाषाणामनुक्त्यान्यूनतातासामपिप्रथमाध्यायस्थत्वात्॥संधिकार्योपयोगित्वाच्च किंचज्ञापकन्यायसिद्धानांवाचनि
कीनांचकासांचित्यागःकासांचिदुपादानमर्धजरतीयंइकोगुणवृद्धीइत्यादिनासंधिकार्यानुपयुक्तानांचात्रकथनंव्यर्थमितिचेन्न

प्रथमाध्यायस्थानां प्रायेण संधिकार्योपयोगिनीनां संज्ञानां प्रायेण कथनस्य प्रक्रांतत्वे तथाभूतानां परिभाषाणामपि प्रायेण कथनं क
र्तव्यमित्यभिप्रायेण तासां कथनस्य कृतत्वात्॥ परनित्यांतरंगानामिति तु परत्वादनेन बाध्यत इत्येतदुपादानायेत्यादिक्रमेण सूत्रभि
न्नपरिभाषाकथनस्योपपत्तिः कथंचिच्चिंत्या॥ ननु किमिदं परिभाषात्वं न तावत्स्वेतरत्वे नैरपेक्ष्येण विध्युपकारकत्वं संज्ञाशास्त्रेष्वति
व्याप्तेः॥ नापि शक्तिग्राहकभिन्नत्वे सति तत्वं॥ षष्ठीस्थाने योगा यस्मिन्विधिः प्रत्ययग्रहणे यस्मात्स इत्यादिष्वव्याप्तेः॥ किंच स्थानिवदा
देश इत्या द्यतिदेशेष्वतिव्याप्तेः॥ यदि चातिदेशभिन्नत्वे सति तत्वं तत्॥ तदाऽसिद्धं बहिरंगमंतरंगे इत्यादिष्वव्याप्तेः॥ इति चेन्न संज्ञा
तिदेशयोरपि परिभाषात्वस्यांगीकारात् उक्तपरिष्कारस्य निर्दुष्टत्वात्॥ तथा चाहुः परितो व्यापृतां भाषां परिभाषां प्रचक्षत इति॥ संज्ञा च
परिभाषा च विधिर्नियम एव च अतिदेशोऽधिकारश्चेत्यभियुक्तोक्तौ संज्ञातिदेशयोः पृथगुक्तिर्ब्राह्मणवसिष्ठन्यायेनेत्येषा दिक्॥ इति प्रथ
माध्यायस्थानां परिभाषाणां प्रायेण प्रकरणं समाप्तिमियात्॥ इको यणचि॥ ननु यथासंख्यशास्त्रेण न निर्वाहः स्वौजसित्यत्रानुनासिक
स्य स्थाने ताद्दृशायणप्रवृत्तये स्थानत आंतर्यस्यावश्याश्रयणीयत्वात् इत्याशंक्याह॥ अनुनासिकस्याने पीति॥ ननु तिबादिसूत्रेण लस्यों
च्चारणप्रसंगे तिब् घटितस्साधुरिति बोधयितुमशक्यं तत्स्थानिक कार्यांतराणामपि सत्वादित्यत आह॥ यदिह परिनिष्ठितेति॥ इह लस्ये

वि० २४ प्रवृत्तियोग्यसकलशास्त्रविषये॥ एतेन॥यथासंख्यशास्त्रेणस्थानेंतरतमसूत्रापेक्षयापरेणव्यवस्थांगीकारेण॥सर्वतइति॥य
त्रप्रमाणकृतमादेशांतरंस्थानकृतंचादेशांतरंयथाचेतेत्या दौअकारएकारश्चतत्रस्थानतआंतर्यंबलवत्॥ यत्रापिस्थानप्रमाणो
भयकृतमेकंकेवलस्थानकृतंचापरंस्यान्यादेशा न्यतरत्तत्राऽपिस्थानकृतांतर्यमेवव्यवस्थापकमितिस्थानेंतरतमसूत्रस्यार्थ
इत्यभिमानः॥सूत्रकृतेति॥वस्तुतोयरोनुनासिकइत्यतोवाग्रहणानुवृत्तिर्बोध्या॥प्रत्यासत्तीति॥ननुस्थान्यपेक्षयाऽदेशएवप्रत्या
सन्नइतिचेन्न॥सूत्रेआदेशस्यप्रत्यासन्नत्वेपिशाब्दबोधायकल्प्यमानेआदेशःस्थानिवदितिवाक्येस्थानिनः प्रत्यासन्नत्वमित्या
शयात्॥अतएवेति॥तन्मात्रवृत्तीत्यनिविश्यतद्वृत्तीत्येवंनिवे शादेवेत्यर्थः॥पुनरिति॥संज्ञासुलक्ष्यलक्षणस्येतिन्यायानाश्रयणा
द्वितिभावः॥तस्यापीति॥इदंचिंत्यं॥द्विरुक्तोत्तरभागात्पूर्ववृत्तित्वस्यदेवदत्तयज्ञदत्तोदेभतुरित्यादौसत्वाद्देवदत्तादेरप्यभ्याससंज्ञा
पत्तिः॥अभ्यासकार्येंगाधिकारेणतद्दोषवारणेतुउर्णुनावेत्यत्रन्हस्वहलादिःशेषइत्यनयो रनापत्तिः॥ एवमेधामासेत्यादावेधामित्य
स्यतत्वापत्तिः॥अस्यापीति॥धिन्वंतीत्यस्यापि॥एतेनधिन्वंतीतिप्रयोजनमपिशिथिलमितिसूचितं नव्यानांत्वयंभावः॥क्वाचित्क
पंचमीसमासंविनैवधिन्वंतीत्यस्यसिद्धौगुरुभूततन्मात्रवृत्तिधर्माश्रयइत्यर्थोनोचितइति॥स्थानिसंबंधीचयोहलित्यस्यफल

माह॥प्रदीप्येति॥उपदेशाप्रवृत्तौ॥शास्त्राप्रवृत्तौ॥यच्चतादृशवल्त्वघटितमितिसमस्तपाठः॥तादृशेतिचवल्त्वविशेषणं॥कार्यएवेति
नतुकार्याभावइत्यर्थः॥व्यवहारएवेति॥अतिदिश्यतइतिशेषः॥इदंतुल्यमिति॥तन्निमित्तातिरिक्तेत्युक्तमित्यर्थः॥शास्त्रीयमेवेति
अतएववस्यानिभूतादचः पूर्वत्वेनदृष्टत्वंतासेोनित्यानिट्त्वंचनातिदिश्यते॥वस्तुतस्त्वशास्त्रीयमप्यतिदिश्यतएव॥कथमन्यथाप्र
दीव्येत्यादौवलादित्वस्यातिदेशप्रसक्तिः॥नचैवंउवयिथेत्यादौतासेोनित्यानिट्त्वमादायवेड्विकल्पापत्तिरितिवाच्यं॥वस्तुतस्तासि
सतइत्यर्थाश्रयणेनादोषात्॥अन्यथातास्वदित्यनेनैवसिद्धेतासीत्यस्यानुवृत्तिवैयर्थ्यं॥नचैवंकंडूतिरित्यत्रउङनापत्तिरितिवाच्यंस्या
निभूतादचःपूर्वत्वस्यवलादित्वस्यैवविशेषणतया॰ल्घटितत्वेनादोषात्॥दकशब्दस्येति॥नत्रभाष्येपूर्वोत्तरपदनिमित्तकार्यात्
प्रागंतरंगोप्येकादेशोनेत्यपिसमाधानांतरमुक्तं॥परिछिन्नपरिमाणेति॥गुडोदकमित्युक्तंभाष्यंतुअभ्युपेत्योक्तिरितिभावः॥लौकि
कन्यायानाश्रयणेपूर्वपक्षस्योत्थानमेवनस्यादितिपूर्वग्रंथाशयः॥एवंचनकश्चिद्दोषइति॥नचाप्रत्ययइत्यस्येत्युक्तदोषोनेत्यर्थः॥क्व
चित्तदनाश्रयणं॥लौकिकन्यायानाश्रयणं॥उवङि॰यणिवेति॥कंडूयेत्यस्ययगंतत्वेउवङ्॥क्यजंतत्वेयणितिविवेकः॥द्विधाहिकंड्वा
दयोधातवः प्रातिपदिकानिचेत्यभियुक्तोक्तेः॥अतएवार्थवत्सूत्रेति॥अतिदिश्यमानधर्मविरुद्धेत्युक्तशास्त्रार्थायोगीकारादेवेत्यर्थः

शि० २५

अंश्च॥इटईटीत्यत्र॥नन्वग्रहीदित्यत्रदीर्घेइट्त्वंदुर्लभं॥प्रदीव्येत्यादाविवशब्दतः स्थानितयोपात्तसमुदायइडितितदवयवेकार
रूपाल्वृत्तीट्त्वरूपधर्मोऽस्त्ययेदीर्घविधौस्थानिवत्वस्यदुर्लभत्वादितिचेन्न स्थान्यवयवाल्वृत्तित्वमित्यत्रमात्रपदनिवेशेनादोषात्॥
यद्वासमुदायसत्तादशायांतदवयवाल्वृत्तित्वंविवक्षितमितिनकश्चिद्दोषः॥लिंगाच्चेति॥कित्वस्यत्काविशेषधर्मत्वात्॥अस्माल्लिं
गाल्अशास्त्रीयधर्मातिदेशोपिकित्वस्याशास्त्रीयत्वात्॥अल्त्वव्यवहाराभावेति॥इदंचिंत्यं॥नदटष्टकारमादायनदइत्यत्रहलङ्या
दिलोपप्रसंगात्॥अचः परस्मिन्॥परनिमित्तइत्ति॥परस्मिन्निति त्यस्यौपश्लेषिकसप्तम्यंतस्याज्विशेषणत्वेतुनपदांतेतिसूत्रेवरग्रह
णंवैयर्थ्यंजक्षतुरित्यत्रस्थानिवत्वाप्राप्तेः॥स्थानिवत्वंसित्ध्यतीत्युत्तरं॥अतएवचङ्परनिर्ह्रासइतिपाठः॥अग्रिमदेशेस्यपाठस्त्व
संगतः॥यलोपीनस्यादिति॥यलोपेनस्थानिवदितिनिषेधस्तुन॥स्वरदीर्घयलोपेषुलोपाजादेशएवनस्थानिवदित्युक्तेः॥निगाल्य
तइति॥इदंवव्रश्चेत्यादेरुपलक्षणं॥पूर्वविधावित्यत्रषष्ठीस्थानेयोगेतिनप्रवर्त्ततेषष्ठ्याअश्रवणात्॥अतएवअचः किमागत्येति
भाष्यंसंगच्छते॥सवर्णदीर्घइति॥इदंप्रयोजनमन्यथासिर्द्ध॥अभ्यासकार्यप्रतिबंधकस्तदुत्तरखंडस्याजादेशस्थानिवद्भावोने
त्यनेनसित्धेः॥उक्तार्थफलंतुश्लेष्मा३घ्नेत्यत्रसंयोगसंज्ञायांस्थानिवत्त्वाभावः॥नकारस्थितिरिति॥वस्तुतस्तुधर्मिग्राहकमानात्सन्नि

योगशिष्टन्यायोलुग्विषयइतिनात्रदोषइतितंत्रवैयर्थ्यं॥ विधेयस्याभावादिति॥इदंचिंत्यं यस्येतिलोपस्यविधेयस्यसत्वात्॥भावसाध
नइति॥इदंभाष्यमेकदेशयुक्तिः फलाभावात्॥नपदांत॥वतिघटितान्येति॥असिद्धंबहिरंगमित्यस्यव्यावृत्तयेवतिघटितेति॥ अचः
परेत्यस्यव्यावृत्तयेऽन्येति॥वतिघटितायेऽचःपरेत्यतोऽन्येऽतिदेशास्तेषामित्यर्थः॥इदंफलितार्थकथनंनत्वाप्यांशाकथनंस्वस्मिन्
चारितार्थ्याभावप्रसंगात्॥भावसाधनइति॥विधिष्वितिबहुवचनंतुविधेयभेदेनविधिभेदात्॥वस्तुतःकर्मणिकिः॥कर्मधारयःस
मासः॥तत्रसुलोप स्थानिवत्वादित्यस्यसुलोपोनेत्यनेनान्वयः॥उत्वेचेति॥इदंचिंत्यं॥रोःस्थानिभूतादचःपूर्वत्वेनदृष्टत्वाभावात् त
स्योत्वेस्थानिवत्वाप्रसक्तेः॥परेतुपदांतस्यस्थानेइत्यर्थःशंकितुमशाक्यः॥पदांतस्यस्थानेविधौद्विर्वचनादेश्वविधौइत्यर्थाश्रयणेवै
रूप्यापत्तेः॥एषोयन्नित्यसाधुःपरत्वान्नित्यत्वाच्चसुलोपस्यन्याय्यत्वात्॥नचतत्रस्थानिवद्भावः॥पादस्यलोपइतिलोपस्येवसुलो
पस्यापिपदचरमावयवत्वात्॥लक्ष्यानुरोधेनपदसंस्कारपक्षस्यैवात्राश्रयणाच्च॥अतएव॥यएवास्मिससन्यजेतिश्रौतप्रयोगए
षयन्निति छांदोग्यप्रयोगश्चसंगच्छते लोकेपिससन्नित्येवप्रयुंजतेनतुसःसन्नितीत्याहुः॥नदोषइति॥ननुपदेऽतइतिसप्तमीस
मासेऽस्मतुपःपदत्वाभावेनैववेतस्वानित्यत्रदोषवारणेपरपदस्याजादेशाइत्यस्यनोपयोगइतिचेन्न॥वेतस्वानित्यादावित्यादिपदे

नापीपचन्देवदत्तयज्ञदत्तविष्णुमित्राइत्यस्यग्रहणेनतत्रोक्तार्थस्योपयोगसत्वात्॥तत्रहिपदेपरतोः तेजुसअजादेशस्तुनपर
पदस्य॥पदचरमावयवविधायकातिरिक्तस्येति॥नचैवंपिपठीरित्यत्ररुत्वंनस्यादितिवाच्यं॥पूर्वत्रासिद्धइत्यस्याप्रवृत्तावपिक्वौ
लुप्तमित्यस्यप्रवृत्यादोषाभावात्।एतेनपिपठीभ्यामित्यादिप्रयोगा उपपादिताविज्ञेयाः।नचैवमपिगर्दभयतीतिनःक्विपिगर्धप्इत्यत्र
जश्त्वाद्यनापत्तिः॥नहितत्रक्वौलुप्तमित्यनेननिर्वाहःअल्लोपस्यक्विनिमित्तत्वाभावादितिवाच्यं॥नपदांतसूत्रस्यभाष्यप्रामेण्येन
ड्मतुप्पित्रेपादिकेकर्त्तव्येपूर्वत्रासिद्धेनेत्यस्याप्रवृत्तिरित्यर्थाश्रयणेनसर्वसामंजस्यात्॥वेतस्वान्महिष्मानित्यनयोः॥पूर्वत्रासि
द्धेत्यस्याप्रवृत्तावपिजश्त्वानस्थानिवदित्यस्यप्रवृत्याजश्त्वंदुर्वारमित्याशंक्याह॥सूत्रेजशपदेनेति॥इदंचिंत्यं॥गर्धब्वानित्यत्रज
श्त्वानापत्तेः॥ननुपदचरमावयवसाधकस्यानिवद्भावस्यैवनपदांतेतिनिषेधः॥यथागोचेत्यादौतथाचवेतस्वानित्यत्रस्थानिवद्भावो
नतत्साधकःकिंतुरुत्वप्रतिबंधकइतिनतस्यनपदांतेत्यनेननिषेधइतिपदेः तइत्यर्थाश्रयणेनतत्रदोषवारणपरंभाष्यंनसंगच्छत
एवेत्याशंक्याह॥प्रतिबंधकश्चेति॥तिङि·त्यादीति॥आदिपदेनचिण्णमुलोरितिसूत्रस्थंभाष्यं॥इदंचदीर्घग्रहणवर्जमित्यंशेसाध
कं॥ननुद्विर्वचनग्रहणादित्ययुक्तं॥द्विर्वचननिषेधस्यात्रकर्तव्यत्वातइत्यरुचेराह॥पूर्वत्रासिद्धेइति॥अनुत्पत्तेरेवेति॥प्रक्षालनाद्धि

पंकस्येतिन्यायात्प्रक्रियादशायामिति। परिनिष्ठितेतुजश्त्वेनदकारइतिभावः सार्थकेति। वस्तुतः भावोनाकृतिरितितन्यायविषयोनात्र। भिन्नार्थ
त्वहंभावनेति। यथागवामश्वेषुचस्वामीत्यत्र। पर एवेति। तेनलिंगविशिष्टपरिभाषयापुत्र्यादिनीत्यत्रनद्वित्वनिषेधः। येननाव्यवधानन्यायेनैकवर्ण
व्यवधानएवतत्प्रवृत्तेः। किंचपुत्रशब्दस्यविशेषणत्वेउभयतआश्रयणेनांतादिवदितिनिषेधात्पुत्रशब्दस्यादिनीपरत्वमेकदेशविकृतन्यायेनोपपा
दनीयंस्यात् एकदेशविकृतन्यायश्चात्तपरिमाणेनप्रवर्त्ततेयविशेषणत्वेतुपूर्वांतवद्भावेनपुत्रशब्दत्वंपरादिवद्भावेनचादिनीशब्दत्वेपौर्वापर्याश्र
यणेएवोभयतआश्रयणइतिनिषेधः अचः परस्मिन्नितिस्थानित्वंपूर्वत्रासित्यइतिनिषित्थं। नचादिनीशब्दस्ययविशेषणत्वेयणोमयइतिरेफस्य
प्राप्तंद्वित्वमेवनिषिध्येत। तस्यादिनीशब्दपरत्वात्तशब्दस्यतदभावादितिवाच्यं। अचः परस्ययरइत्यर्थाश्रयणेनादोषात्। नेमौरहौकार्यिणाविति
भाष्येणरेफस्यद्वित्वकार्यित्वाभावाच्च। अतएव। ङ्यंतानुकरणत्वादेव। आदिनीशब्दोयस्मादिति। अन्यथाः दिन्शब्दोयस्मादितिवदेत्। पुत्रह
तीति। पुत्रोहतोययेतिविग्रहः॥ बहुव्रीहेश्चांतोदात्तादस्वांगपूर्वपदादितिङीष्। अतएवेति॥ सजातीयानांग्रहणादेवेत्यर्थः। इदंचिंत्यं। विजाती
यानांग्रहणेप्यचः परस्ययरइत्यर्थस्यवक्ष्यमाणत्वेनाचोरहाभ्यामित्यस्यैवैयर्थ्याभावात्। शेषार्थेत्यस्यफलमाह। आपत्यस्येति। यमामितिकिमि
ति। हलः परस्यलोपइत्युक्ते। नवध्यवधिमतोः साजात्यात्यलएवलोपोभविष्यतीत्याशयः। इतरांशेइकारोकारांशे। नन्वयाद्यादेशेसंवृतस्यश्रूयमाणस्या

पि शास्त्रदृष्ट्याः सिद्धत्वा

द्वित्त्वमेवेतिचेन्न॥एतद्भाष्यप्रामाण्येनासिद्धत्वाभावकल्पनात्॥किंचसवर्णसंज्ञादृष्ट्याअअइतिविहितस्यसंवृतस्यासिद्धत्वे
पिस्थानेंतरतमसूत्रदृष्ट्यानासिद्धत्वंतस्यलोकन्यायसिद्धार्थानुवादकत्वस्यभाष्यसंमतत्वात्लौकिकन्यायेचसंचरणीयेनासिद्ध
त्वं॥यस्मिन्विधिरितिपरिभाषांविनैवयांतप्रत्ययासंभवाद्यादावित्यर्थोभविष्यतीत्याशंक्याह॥तस्मान्नुडिति॥वाचनिक्येति॥इदं
चिंत्यं॥नल्पपीतिलिंगेनतत्सिद्धेरितिकेचित्॥यस्मिन्विधिरिति॥सप्तम्यंतेविशेषणे॰ल्शब्देउपादीयमानेयस्मिन्नलियोविधिः
सतदादावित्यर्थः॥हलिसर्वेषामित्यत्रवग्रहणंनानुवर्त्ततेइत्यभिप्रेत्याह॥लोपःशाकल्यस्येति॥निमित्तत्वानाक्रांतेइति॥यथाप्रकृते
पूर्ववकारे॥नहिततःपूर्वंलोपकार्यी तिष्ठतियेनतस्यनिमित्तत्वंस्यात्॥अचोरहाभ्यामित्यत्रतुरेफेद्वित्वनिमित्तेनियमेनद्वित्वकार्यि
त्वंप्राप्नोति॥विधेयविषयश्चेति॥अचोरहाभ्यामित्यनेनरेफस्यद्वित्वनिमित्तत्वमपूर्वबोध्यमितिविधेयमेवेतिभावः॥विशेषासंप्र
त्ययादिति॥कुटिलंव्रजतीतिवाक्यात्कुटिलंपंथानंगच्छतीत्यस्यैवप्रतीतिर्नतुकौटिल्यविशिष्टव्रजनरूपविशेषस्यसंप्रत्ययः॥श
ब्दस्वाभाव्यादित्यर्थः॥अनुकृष्यतइति॥अनुकृष्यमाणस्यचयङं·तेनक्रियासमभिव्याहाररूपविशेषासंप्रत्ययादित्यर्थः॥लौकि
कोदाहरणेति॥छंदसितुजीवेरदानुकिजीरदानुःस्रिवेरास्रेमाणमित्युदाहरणमस्त्येवेतिभावः॥व्यवस्थिततत्वादिति॥व्यवस्थि

तविकल्पत्वादित्यर्थः॥ इत्याहुरिति॥ परेतुलोपोव्योरितिसूत्रेवकारप्रत्याख्यानमेकदेश्युक्तिः॥ इकोगुणेतिसूत्रस्थभाष्यविरोधात्
अतएवनपदांतसूत्रेवृक्षवित्यत्रपदांतस्यस्थानेइत्यर्थेलोपोव्योरितिलोपआपादितोदीक्षितेनलण्सूत्रेचवृक्षवित्यत्रक्विपिलो
पोव्योरितिलोपप्रसंगइतिकैयटेनोक्तं॥ लोपःशाकल्यस्येत्यत्रवृक्षवृकरोतीत्यत्रलोपोव्योरितिलोपस्याग्रिमशेखरेआशंकिष्यमाण
त्वात्च॥ अतएवसुधेसुधेचारिवत्धात्सूत्राणांसुकारणेलाघवतश्चरामः॥ विशेषणेद्वयइहादिकर्तुर्वदेदवीतिसहिकैयटीयेइत्यभि
युक्तोक्तिःसंगछते॥ तत्रहिसुधेसुकरितिधिन्विकृण्विभ्यांविचिगुणेरूपं॥ नचसुत्थेइत्य त्रनधातुलोपइतिगुणनिषेधःशंक्यः॥आ
र्धधातुकत्वतद्व्याप्यान्यतररूपेणार्धधातुकनिमित्तकेलोपएवतत्प्रवृत्तेः॥ अन्यथानधातुलोपेत्यस्यप्रत्याख्यानेनफलभेदापत्तेः॥
अगुषीदित्यादेोतिपूनिमित्तकगुणवारणायलघूपधाद्धिहितेप्रत्ययेगुणइत्यर्थेतुअत्रगुणोदुर्लभः॥ अतएवचच्छ्वोःशूडितिसूत्रेभाष्येऊठ
इत्वेऊडादिःकस्मान्नभवत्यस्त्वादिर्लोपोव्योरितिवकारस्यलोपोभविष्यतीत्युक्तंभाष्ये॥ तत्रैवकैयटेक्विग्रहणानुवृत्तिपक्षेदिवेर्य
ङ्लुकिदेदेतीत्युक्तं॥ छंदसिसर्वविधीनांवैकल्पिकत्वमाश्रित्यपगव्यूतिरित्यत्रवलोपवारणंत्वगतिकगतिः॥ लोकेध्वपरिमाणेसव
कारेणैवाध्वपरिमाणप्रतीत्यावलोपोनेत्यपिशिथिलं॥ नहिपूर्वपदादित्यत्रेवसवकारेणाध्वपरिमाणेगम्येवांतादेशइत्यर्थोस्ति॥ व

स्तुतः पूर्वपदादित्यत्रापि सः। णत्वेन संज्ञायां गम्यमानायामित्यर्थेन युक्तः॥ अग इत्यस्य वैयर्थ्यापत्तेः॥ रघुनाथादौ क्षुभ्नादित्वाण्णत्वं नेत्या
... तदा ... न तच्छब्देन॥ तत्र धान्यक्रय्यमिति॥ तत्पुषविषयधान्यं क्रयमित्यर्थः॥ तत्पुरुषं प्रति तद्धान्यं क्रय्यमिति फलितं॥ तत्र धान्यं
क्रेयमिति॥ तत्पुरुषं प्रति धान्यं क्रेयमिति फलितं॥ द्रव्येति॥ मूल्यभूतस्वर्णरूप्यादिद्रव्ये इत्यर्थः॥ लोपः शाकल्यस्य॥ बाधकमिति
गार्ग्यग्रहणस्य पूजार्थत्वेनानित्यं तदिति भावः॥ शाकल्यमते इति॥ अत एव कोबाहू काउ रू इति शाकलानां वकाररहितः पाठः॥ तैत्ति
रीयाणां सवकारः पाठः॥ एतेनेति॥ वलोपेस्यानिवत्त्वेनेत्यर्थः॥ अन्योन्याश्रय इति॥ यथा स्यन पदांतसूत्रस्य शब्द रत्नेनाविरोधस्तथा
तट्टीकायामस्माभिर्निरूपितम्॥ पदत्वादिद्वारकेति॥ आदिपदेन पदत्वाभावः॥ परंपरया वेत्येतत्प्रापकस्य प्रतिबंधकस्य वेत्युभयत्रा
न्वयि॥ अत्र च स्थानिवद्भावः पदत्वाभावसंपादनद्वारा पूर्वत्रासित्थीयप्रतिबंधक इति बोध्यं॥ वस्तुतस्तु पूर्वत्रासित्थीय इत्यस्यैवमर्थ
करणे फलस्य प्रमाणस्य चाभावः॥ ननु पाचयतेः पाक्याजयतेर्याट् पि पठिषतेः पिपठिरित्यादौ कुत्वादिप्रवृत्तिः फलं॥ अन्यथा तत्र
पदसंज्ञायां चकारादेः पदांतत्वाभावेन कुत्वाद्यनापत्तेरिति चेन्न॥ कार्यकालपक्षे पदसंज्ञाया अपि पूर्वत्रासित्थीयत्वेनादोषात्॥ हलोणः
स नीति भाष्ये क्वचित्परेण संतीति पाठः॥ इत्याहुरिति॥ परे तु भोभगो इति सूत्रे भाष्ये वृक्षवृक रोतीति प्रयोगस्यकंठत एव पठितत्वेना

नभिधानोक्तिः साहसादेव॥ नपदांताहलोऽणः संतीत्यत्रचकार्यभाजइतिशेषइतिकैयटेनेवलण्सूत्रेविस्पष्टमुक्तत्वेनह्रस्ववादेरनभि
धानेप्रमाणाभावाच्च ह्रस्वव्करोतीत्यत्रचाचीत्यनुवृत्याहलिसर्वेषामित्यस्याप्रवृत्तौवकारस्यनकार्यभाक्त्वं॥ यद्वानपादांताहलोण
इत्यस्यदोषसंपादकाइतिशेषः॥ तेनहरएहिविष्णविहेत्यादौपदांतहल्रूपाणांसत्वेपिनक्षतिः॥ ह्रस्वव्करोतीत्य त्राचीत्यनुवृत्यान
दोषइतिस्पष्टमेवभाष्येउक्तं॥ वकारनिवृत्त्यैवात्रतद्वारणसंभवादितितुनयुक्तं॥ द्वंद्वनिर्दिष्टयोरेकदेशानिवृत्यसंभवात्॥ अतएवद्वंद्वेनि
र्दिष्टैकारस्यनिवृत्यर्थमदसोमादितिसूत्रेमाद्ग्रहणंकृतं॥ भोभगोइतिसूत्रस्यश्चिंत्यमेतदितिकैयटग्रंथस्तुलण्सूत्रस्यस्वोक्तदिशोपप
त्तिश्चिंतनंकार्यमित्येवंपरइत्याहुः॥ इतिवदिति॥ अनूद्यमानविशेषणेपिसापरिभाषाप्रवर्ततइतिभावः॥ वव्रेइति॥ स्थानिवत्सूत्रेआरेत्या
दौस्वोक्तदिशाद्विरुक्तपूर्वभागस्यपुनरभ्यासत्वेऽनादेस्तेननिवृत्तेश्चिंत्यमेतदितिकेचित्॥ अत्रपक्षेइति॥ अणमनूद्यरपरत्वंविधीयत
इतिपक्षेइत्यर्थः॥ रलपराणिति॥ वृद्धिरादैजदेङ्गुणइतिसूत्रयोराराले अरलौचविशिष्यनिर्दिष्टौ॥ ऋतइद्धातोरित्यादौतुरपरः
पाठ्यः॥ भृज्जामिति॥ इदंनयुक्तं॥ अभ्यासेहलादिः शेषेणानादेर्हलोनिवृत्तेर्विशेषाभावात्॥ अतएवास्येति॥ इदंचिंत्यं॥ विनिगमनावि
रहेणार्थद्वयपरत्वेपिविकल्पालाभात्॥ अर्थद्वयपरत्वंतुतंत्रावृत्त्यादिनाबोध्यं॥ पृथक्पदमिति॥ पूरणगुणेतिषष्ठीसमासनिषेधा

दितिभावः॥इणेवेति॥ नतुवीगतीत्यत्रप्रश्लिष्ट इत्यर्थः॥वृक्षेशाखेतिन्यायनये ऽवयवस्यावयविन्याधारत्वप्रसिध्यावपिलोके ऽवयवि
नोप्यवयवाधारत्वंप्रसिध्यमितिभावः॥ एवं तस्यशब्दांतरत्वमभ्युपेत्यतुष्यतुदुर्जनइतिन्यायेनाह॥ किंचेति॥एधत्यवयत्वे इ ति॥तत्वे
नदृष्टेइत्यर्थः॥भेदेनापेक्षायामिति॥इदंबाध्यमित्यपेक्षायामित्यर्थः॥सर्वबाध्यमितिविवक्षायांतुनायंन्यायः॥यथाऽचिएदेशे॥पूर्वधातु
रिति॥अत्रचेदमपिलिंगमितिभावः॥अंतादिवच्च॥पूर्वपरशब्दोचेति॥तथाचपूर्वपरयोरित्यंताद्योर्विशेषणं॥यद्वापूर्वपरयोरित्यध्या
हृतव्यवहारान्वयीतथाचांतादिवर्णवत्त्वघटितसमुदायेप्रातिपदिकत्वादिव्यवहारानादेशः संपादयति॥समुदायस्यांतादिभ्यामित्य
ग्रिमशेखरस्वारस्येनतुपूर्वपरयोरित्यस्यांतादिपदार्थेन्वयइतिलभ्यते॥अंत्यपक्षेतुसमुदायेत्यस्यपेव्यवहारइत्यनेनान्वयः॥षष्ठ्यर्थो
निष्ठत्वं॥अत्रचवतिस्तेनतुल्यमित्यनेन॥एकादेशइतिप्रथमांतश्रवणात्॥कृतैकादेशस्येतितुफलितार्थकथनं॥औइत्यस्येति॥
तस्यैकादेशघटितत्वंव्यपदेशिवद्भावेन॥तद्वैयर्थ्य मिति॥अधिपूर्वाद्दैवादिकादीङ्‍ गताविति धातोः क्तोप्यपितुगभावार्थमसिध्य
वचनस्यचारितार्थ्याच्चिंत्यमेतदितिकेचित्॥इष्यतएवेति॥इदंचिंत्यं॥स्थानिवत्सूत्रप्राप्तस्थानिवत्वस्यै वोभयतआश्रयणइत्यनेन
निषेधांगीकारादिति॥ इतिदिगिति॥अन्येत्विदंदेवदत्तस्येदंयज्ञदत्तस्येत्यादावग्रिमेदमित्यस्योत्तरान्वयित्वेनदेवदत्तस्येदमितिस्या

निसमुदायस्यनिरर्थकत्वेनदेवदत्तस्येदमित्यादेशकल्पनानतत्रसंभवति॥अर्थवत्येवानुमानिकस्यान्यादेशभावविश्रांतेः॥त
याचतत्रेष्टानुरोधेनदेवदत्तस्येतिवेदमितिवाऽऽदेशःकल्पनीयः॥एवंस्वाश्वशब्देपि॥तत्रहिस्वाइत्यादेशकल्पनाऽऽश्वइत्यादेशक
ल्पनावास्यात्॥तथाचानुमानिकस्थान्यादेशभावेएकादेशविषयेप्रत्येकंस्थानित्वेपिएकादेशांतेपूर्ववृत्तिधर्मस्यतदादौपरवृ
त्तिधर्मस्यस्थानिवद्भावेनलाभोनतुवैपरीत्येन अत्रैवांदिवच्चेतितात्पर्यग्राहकं॥एवंचआश्वशब्देऽश्वशब्दत्वंस्थानिवद्भावेनस्यान्न
स्वशब्दत्वमितिनदोषः॥भियइत्यादौतुभीशब्दत्वंस्थानिवत्वेनस्यादेव॥आनुमानिकस्यान्यादेशभावेएकादेशघटितेधातुत्वा
नयनसंभवात्॥क्षीरपेणेत्यत्रतुपेशब्देआनुमानिकस्थान्यादेशभावमाश्रित्योत्तरपदत्वमात्रमानीयतइतिणत्वसिद्धिरितिभा
वः॥एवंचसत्यंतादिवद्भावस्यस्थानिवत्सूत्रमूलकतयानवातादृूप्यानतिदेशादितिप्रतिषेधखंडनंसूपपद्यते॥अतएवङ्याप्ग्र
हणेऽदीर्घइतिस्थानिवत्वनिषेधेऽपरदीर्घग्रहणंचरितार्थं॥एकाजुत्तरपदत्वस्यांतवद्भावेनातिदेशेखट्वाभिरित्यादावदंतत्व
स्याप्यतिदेशापत्तिः॥पूर्वपरघटितसमुदायस्येत्यर्थेनतुनवातादृूप्यातिदेशादितिवार्तिकार्थस्यतुनक्रोडीकारः रामावित्यादौ
भवदुक्तदिशाव्यपदेशिवद्भावोनाभिरित्यत्रपूर्वांतवद्भावेनात्वातिदेशेऐसादेशापत्तिरित्याहुः॥ज्ञापकानुसरणंवेति॥तस्मादित्यु

तरस्येतिनिर्देशात्ज्ञापकात्त्रिपादीस्थेंतरंगेप्यंतरंगपरिभाषाक्वचित्प्रवर्ततेइतिदध्यत्रेत्यत्रनसंयोगांतलोपः॥ बहिरंगपणो
सित्थत्वात्। परेतुपूर्वत्रकर्तव्येपरस्यासित्थत्वेपितत्रकृतेपरस्यासित्थत्वेमानाभावः॥ एवमेवहल्संध्यंतेशब्दरत्नेस्पष्टमे.
वोक्तं॥ तथाचनार्कूटादौपूर्वस्याःकृतत्वेनतांप्रतिपरस्यविसर्गस्यांतरंगस्यपूर्वत्रेत्यनेनसित्थत्वबोधनमशक्यं॥ तथाचबाधकाभा
वात्॥ अंतरंगपरिभाषाकार्यकालपक्षेपरिभाषांतरवत्त्रिपाद्यांप्रवर्ततएव॥ विसर्जनीयसूत्रेशेखरोक्तयुक्तिमुपजीव्यप्रवृत्तं॥
अयुक्तोयंपरिहारोनवाबहिरंगलक्षणत्वादितिभाष्यंशिथिलमेवयुक्तेःशैथिल्यात्॥ अतएवशिथिलयुक्तिमूलकस्योभौवाविशेषा
दितिकात्यायनसूत्रस्यानुज्ञापकत्वलक्षणशैथिल्यंजैमिनिनोक्तं॥ उभावाग्नेयाग्नीषोमीयपुरोडाशौचतुर्धाकर्तव्यावविशेषात्आ
ग्नेयंचतुर्धाकरोतीतिश्रुतौअग्निदेवताकपुरोडाशेचतुर्धाकरणस्योक्तत्वेनोभयोरपिपुरोडाशयोरग्निदेवताकत्वाविशेषादितितत्सूत्रा
र्थः॥ तत्रचाविशेषादितियुक्तिःशिथिलाऐंद्राग्नेचतुर्धाकरणवारणायश्रुतावाग्नेयपदेनाग्निपर्याप्तदेवताकत्वस्यैवविवक्षितत्वात्।
तस्यदोषइतितुबहिरंगासित्थत्वेनसित्थ्यौक्यर्थमेव॥ एवंचतत्रतत्रवचनानिनकार्याणीतिमहल्लाघवं॥ तस्मादित्युत्तरस्येत्यादिज्ञा
पकंवाक्वचित्त्रिपाद्यांकार्यकालपक्षेबहिरंगपरिभाषाप्रवर्ततइत्यर्थेऽनुसर्तव्यमितिनकश्चिद्दोषइत्याहुः॥ सुबंतप्रकृतिकेइ

ति॥ नतुसुबंते धातावित्यर्थः॥ तथ्यासति ऋतधातोः क्विपि सुप्येव प्रवृत्तिः स्यात्॥ उपर्षभीयतीति॥ नन्वंतरंगत्वादेवात्र पूर्वं गु
णस्य प्रवृत्त्या नवृत्थिरिति चेन्न॥ उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियत इत्यंगीका
रेणादोषात्॥ एवं चेत्यत्र वक्तव्यपदाभावेन सूत्रत्वभ्रमं निराकर्तुमाह॥ वार्तिकमिति॥ गमकत्वादिति॥ वृत्त्यघटकपदार्थान्वि
तस्वार्थावगमकत्वेन शिष्टप्रयुक्तत्वादित्यर्थः॥ शब्दज्ञानानुपातीति॥ शब्दज्ञानोत्तरमेव जायमान इत्यर्थः॥ पतंजलिनावृत
यः पंचतय्य इत्युपक्रम्यारोपात्पृथग्विकल्पात्मिकां वृत्तिमुक्त्वा तल्लक्षणमिदं सूत्रं प्रणीतं॥ तदुदाहरणं तु चैतन्यस्य स्वरूपं घटस्य
स्वरूपमित्युक्तं तद्भाष्यकृता॥ तत्र हि चैतन्यस्वरूपपदार्थयोरभेदेन तत्संबंधरूपं पदस्तु तच्छून्यमविद्यमानं यस्य विषयः सवि
कल्प इत्यर्थः॥ अत्र मार्तंड इत्युदाहरणविषये ऽचौंत्यादिटीति शास्त्रं विकल्पात्मकज्ञानजनकमिति तात्पर्यं॥ परे तु संग्राहकशास्त्र
स्यान्यत्र चारितार्थ्यादेतद्विषये वचनाभावे उपप्लव एव न स्यात् विकल्पात्मकज्ञानजननं तु दूरेतरां॥ किंच संबंधांश एव विकल्पा
त्मकं ज्ञानं न तु आदित्यांशे विकल्पात्मकज्ञानस्य शास्त्रप्रवृत्त्युपयोगित्वं च निर्मूलं॥ अत एवाद्यंतवत्सूत्रे भाष्ये ऽपूर्वानुत्तरत्वल
क्षणत्वादाद्यंतयोः सित्थमेकस्मिन्नार्थ आद्यंतवद्भावेनेति वार्तिकमतमुपन्यस्य गोनर्दीयस्त्वाह सत्यमेतत्सत्यति त्वन्यस्मिन्नि

तिस्वमतेनसूत्रारंभएवकार्यइत्युक्तमित्याहुः॥इतशब्द लोपेइति॥इतिजश्त्वाभावेचेत्यपिपूरणीयम्॥संध्याकरणसमयइ
ति॥सर्परूपेणेतिशेषः॥ओत्वोष्ठयोः॥ननुअत्रसमर्थपरिभाषोपस्थितावस्यवासुदेवस्योष्ठइतिसमासेएवेदंस्यान्नबिंबोष्ठइत्यादौ
तत्राकारस्यानर्थकत्वेनोष्ठेनासामर्थ्यादित्याशंक्याह॥अत्रसमर्थेति॥पदत्वेनेति॥एतस्योदाहरणंमृग्यं।प्रत्युतयुष्मदस्मदोःषष्ठी
त्यादिसूत्रेषुपदस्यपदादित्यधिकारेणैतत्परिभाषाप्रवृत्तौअसामर्थ्येआदेशानापत्तिः॥परमवइत्यादावेवस्यात्प्रवृत्यापत्तिश्चे
त्यपिबोध्यं॥सुबंतत्वेवेति।तिङंतत्वेनचेत्यपिबोध्यं॥तेनाख्यातमाख्यातेनेत्यादावप्येतत्परिभाषोपस्थितिःसिध्या॥ताध्दितविधौप्रातिप
दिकत्वेनोद्देश्यत्वेपिघकालतनेष्वित्यादिज्ञापकेनस्वार्थेपरिपूर्णमितिन्यायेननचार्थिकंसुबंतत्वेनोद्देश्यत्वंनहिशब्दस्तेनरूपेणो
द्देश्यत्वेएवतत्प्रवृत्तिरित्य.त्रकिंचिन्मानं॥तत्रैवेति॥तेनान्यादितरेत्यादौनतत्प्रवृतिः॥ओत्वोष्ठादिमात्रस्येति॥ओत्वोष्ठयोरादिरो
कारस्तन्मात्रस्यपदत्वाभावादित्यर्थः॥एतदुत्तरंतदुत्तरपदकेसमासेइत्यर्थासंभवादितिशेषः॥तद्घटितेति॥अवर्णौत्वोष्ठसंबंध्य
चूएतदुभयघटितेत्यर्थः॥अन्यथेति॥अजाद्योरोत्वोष्ठयोरित्यर्थेइत्यर्थः॥अयंभावः॥ओत्वोष्ठयोः॥परत्वेनाश्रयणेहिप्रत्यास
त्यातदुत्तरपदकेसमासेएवास्यप्रवृत्तिःस्यात्॥अत्रत्वोत्वोष्ठयोरजेवपरत्वेनाश्रितः॥तेनैोष्ठस्यव्रणःओष्ठव्रणःवृषलस्योष्ठव्र

णः वृषलोष्टव्रणइत्यत्रापिपररूपंभवति।।नह्यत्रोष्ठशब्दउत्तरपदंकिंत्वोष्ठव्रणशब्दः समर्थपरिभाषानुपस्थितेरित्योष्ठ्योर्वृष
लोष्ठव्रणइत्यपिप्रयोजनंयोज्यं।।नह्यत्रादंतस्यओष्ठेनसामर्थ्यमस्ति।।तयोः परस्परमनन्वयात्।। एवंसंगस्यकार्यं संगकार्य
मंगुलेः संगकार्यमंगुलिसंगकार्यमित्य त्रापिषत्वंभवत्येव।।अंगुलिशब्दघटकेणः परस्यसंगसकारस्यषत्वमि त्यर्थः
श्रयणेनप्रकृतसाम्यात्।।ईषदर्थेति।।तेननिपातइतिनप्रकृतिभावः।।ऋत्यकइतिपाक्षिकप्रकृतिभावस्तुस्यादेव।।ननुआऋ
षभइत्यत्रऋत्यकइतिप्रकृतिभावेपश्चादद्यशब्देनसंबंधेतेनसवर्णदीर्घेचपश्चादृत्यकइत्यस्यपाक्षिकत्वादप्रवृत्तौगुणेन
अद्यर्षभीयसिद्धिरितिचेन्न।।तस्मिन्नेवलक्ष्येप्रथमंभावोपक्रमेपश्चात्प्रकृतिभावस्याभावायोगात्।।अन्यथाशुशुवतुरित्यादौ
वैकल्पिकत्वाद्विभाषाश्वेरित्यस्यपूर्वमप्रवृत्तौद्वित्वेश्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधइतिअभ्यासलक्षणसंप्रसारणाप्रवृत्तौ
पश्चाद्विभाषाश्वेरित्यस्योत्तरखंडेप्रवृत्तौशिशुवतुरितिरूपापत्तेः।।अव्यक्तशब्दस्यध्वनौयोगंदर्शयति।।अविद्यमानेति।।अ
विद्यमानंव्यक्तंकत्वादिधर्मोयत्रसोऽव्यक्तइतिविग्रहइतिभावः।।अनुकरणएवेति।।तथाचसूत्रेऽनुकरणशब्दः स्पष्टार्थइति
भावः।।अतइतिकिंवटगित्यपपाठः।।शंकासमाधानयोर्निर्दलत्वात्।।फलकल्पनेति।। पटदितीतिशब्दांतस्यानुकरणेद्वित्वेप

टद्रितिपटद्रितीत्यत्राम्रेडितघटिततकारस्यद्वित्वाभावः अंत्यस्येत्यस्यफलमितिफलकल्पनाभिनिवेशइत्यर्थः॥अइउण्सूत्रानंत
रमिति॥इदंचिंत्यं॥तयोरिक्प्रत्याहारेप्रवेशापत्तेः॥ऋलृक्सूत्रानंतरंतयोः पाठस्सूचितः॥लृकारेइति॥ऋकारात्परतइतिशेषः॥
तादृशस्येति॥विवृतत्वादिमतइत्यर्थः॥प्रत्याख्यातमिति॥लृऋवर्णयोः सावर्ण्यमाश्रित्येतिशेषः॥ननुऋकारस्यलृकारेपरे
विवृतऋकारएवस्यात्नत्वीषत्स्पृष्टलृकारःतस्यापिविवृतधर्मद्वयकृतांतर्यणांतरतमत्वात्॥एवंगमृनित्यत्रलकारवतांतर्येण
षत्स्पृष्टोदुर्वारइतिचेन्न॥ऋलृक्सूत्रानंतरंपाठस्यहोलृकारइत्यत्राचत्वसिध्द्यर्थाप्लुतार्थत्वेनपाठसामर्थ्येनयत्किंचिदांतर्ये
पीषत्स्पृष्टलृकारस्यलक्ष्येप्रवृत्त्यंगीकारात्॥गमृनित्यत्रत्वीषत्स्पृष्टस्यशंकैवनास्तिपूर्वसवर्णत्वाभावात्॥एवंधातृणामित्यत्रे
षत्स्पृष्टदीर्घस्यनशंका।रेफद्वयाघटितत्वविवृतत्वरूपधर्मद्वयकृतांतर्यस्यविवृतेएवसत्वात्॥ननुत्रिषष्टिश्चतुःषष्टिर्वावर्णाः
शंभुमतेमताः॥प्राकृतेसंस्कृतेचापिस्वयंप्रोक्ताःस्वयंभुवा॥स्वराविंशतिरेकश्चस्पर्शानांपंचविंशतिः यादयश्चस्मृताह्यष्टौचत्वा
रश्चयमाःस्मृताः॥अनुस्वारोविसर्गश्चकःपौचापिपराश्रितौ॥दुस्पृष्टश्चेतिविज्ञेयोलृकारःप्लुतएवचेतिशिक्षाविरोधः॥ईषत्स्पृ
ष्टयो रनयोराधिक्यात्॥तत्रदुःस्पृष्टोलकारोमातृकान्यासेपिनैतौपरिगणितौतथाहितत्रषोडशस्वराःपंचविंशतिस्पर्शा

यादयोष्टोलक्षेतिद्वयंसंकलनयैकपंचाशद्वर्णाभवंतीतिचेन्न॥तुल्यास्यसूत्रस्यभाष्यवार्तिकप्रामाण्येनैतयोरपितत्रपूरणात् य
थाः स्वरसमाम्नाये मातृकापाठे [illegible] विद्यमाना अपियमा उक्तशिक्षाबलाद्वर्णराशिषुपूर्यंते॥शिक्षायामपरिगणितोपिदीर्घलृका
रोमातृकापाठेपठ्यते॥परेतुत्रिषष्टिश्चतुःषष्टिर्वेतिसंख्याधर्मकृता नतुव्यक्तिकृता॥वर्णानांप्रत्युच्चारणेभेदपक्षेऽसंभवात्
तथाचाभितोज्भक्तिसहितरेफघटितत्वतादृशकालघटितत्वरूपधर्माभ्यांद्वाभ्यांविवृतयोरीषत्स्पृष्टयोश्चलृऋवर्णयोर्द्वि
त्वं॥एवमेवत्रिमात्रचतुर्मात्रयोः प्लुतावैचइदुताविति सूत्रेभाष्येविस्पष्टमुक्तयोरेओङ् सूत्रभाष्येणत्रिमात्रचतुर्मात्राआदे
शामाभूवन्नित्यनेनसूचितयोर्द्विमात्राधिकमात्रिकत्वेनानुगमेनप्लुतमध्येंऽतर्भावान्नाधिक्यं॥सत्यभिधानेगम्भृणामित्यत्रविवृ
तत्वसाम्येनविवृतोदीर्घऋकारोलकारवत्तातर्येणेषत्स्पृष्टऋकारश्चपर्यायेणभवतएवामातृकापाठेपठितोपिदीर्घलृकारोवि
कृतोनभवति॥तस्योच्चारयितुंशक्यत्वेपितुल्यास्यसूत्रस्यभाष्यकैयटप्रामाण्येनतस्यशास्त्राविधेयत्वात्॥मात्रिकएकारस्तु
उच्चारयितुमशक्यत्वान्नास्त्येवेत्याहुः॥रेफात्परंभक्तेरिति॥रेफाद्भक्तेः परंनतत्क्वचिदपिव्यपवृत्तमिति तदर्थ एतद्भाष्येण
तु रेफात्परतो[illegible]भक्तिरस्तीत्यागतं॥हयवरट्सूत्रस्थेति॥एओङ् सूत्रस्येत्युचितं॥तत्रैवतथाभाष्यद र्शनात्॥नऋकार ई

षत्स्पृष्टइतिशेषः॥नास्तीति॥लृकारादितिशेषः॥लृकारईषत्स्पृष्टः॥विषयविशेषएवपूर्वस्यसाधुत्वंविषयविशेषएवोत्तरस्य
साधुत्वमितिव्यवस्थांगीकारादेव॥वस्तुतलृकारात्परतऋकारस्यप्रयोगेनमानं॥उक्तव्यवस्थांगीकारेप्रमाणमाह॥अतएववा
र्तिकेइत्यादिना संगच्छतइत्यंतेन॥अतएवहृस्वऋकारद्वयेत्यादिव्यवस्थांगीकारादेवअयनंयस्येति॥स्रो स्यायनआश्रयइति
षष्ठीतत्पुरुषइतिकेचित्॥अन्यस्तदभावस्येतिअन्योऽवङोनस्मर्त्तेत्युक्तौतदभावस्यस्मर्तेत्यर्थाल्लभ्यतेइतिभावः॥देवत्रातइ
ति॥अत्रपक्षेनत्वंन॥गलः॥ अत्रपक्षेलत्वाभावेन॥ग्लाः॥अत्रपक्षेऽचून॥इतियोगेसद्विधिः प्रातृपानचोर्विधिः॥मिथएकैकस्मि
न्नर्थेतेनत्वादिविधयोनविभाष्यंतेनविकल्प्यंतेकिंत्वर्थभेदेनैवभावाभावयोर्व्यवस्थेत्यर्थः॥अप्रामाणिकत्वज्ञापनार्थइति॥व
स्तुतोव्यवस्थितविभाषायाअगतिकगतिकत्वज्ञापनार्थं॥इदंचेति॥एवमेवविकल्पेप्राप्तेनित्यार्थविधयःसंगच्छंते॥सामंज
जस्यमिति॥नेतिपाठेतुप्लुतप्रगृह्याणामितिषष्ठीनिर्देशः स्यादितिभावः प्लुतप्रगृह्या॥जानूअस्येति॥नन्वत्रस्थानिवत्वेनप्रगृह्य
त्वंवाच्यंतच्चदुर्घटंन व्यमतेतस्यालधर्मवृत्तित्वादितिचेत्सत्यं॥परादिवद्भावेनैवप्रगृह्यत्वांगीकारात्अप दांतादाविति॥आदिपदे
नसमासादेः॥वार्तिकमिति॥वक्तव्यपदाभावात्सूत्रत्वभ्रमवारणायेदम्॥एतेनेति॥पदांतग्रहणानुवृत्त्यैवाच्केदित्यादेर्व्यावर्त्तने

नेत्यर्थः॥अपास्तमिति॥नचान्यार्थमवश्यमाश्रयणीयेनचकारेणेवप्रकृतिभाववारणे पदांतग्रहणानुवृत्तौगौरवमितिवाच्यं॥ दिवउदित्युत्तरार्थंतदनुवृत्तेरावश्यकत्वात्॥अनंतरस्येतिन्यायेनपुनर्वृद्धिविधानस्यपररूपमात्रबाधनत्वाच्च॥दृषदस्माषा वृक्षकोबहूकृकइत्यर्थंतुप दांतग्रहणस्यावश्य कत्वाच्च॥उपलक्षणमिति॥आयुष्मान्भवसौम्येतिवाच्योविप्रोभिवादनेइतिमनुः॥स्मृतिष्विति॥असौनामाहमस्मीतिस्वंनाम्नः॥तर्ह्येधीतिप्रयोगेकिंमूलमितिचेत्॥आयुष्मानेधीतिभाष्योदाहरणमेवेत्यवेहि॥ दंडिन्नित्यादाविति॥दशम्युत्तरकालंजातस्यपुत्रस्यनामपरिकीर्तयेत्इत्यादिमनुस्मृतिषु॥अत्रनामपदंगोत्रस्याप्युपलक्षणम्॥ घोषवदाद्यंतर स्थमवृत्थंत्रिपुरुषानूकमनरिप्रतिष्ठितंतद्धिप्रतिष्ठिततमंभवतिद्व्यक्षरंचतुरक्षरंवानामकृमविदध्यात्॥ दूरात्धूतेचदूरांतिकार्थेभ्यइतिप्रातिपदिकार्थमातंकुर्यान्नतद्धितमितिकल्पसूत्रेतद्धितांतस्यनामत्वप्रतिषेधादितिभावः॥ नचवाक्यस्यटेरित्यधिकारादंतग्रहणवैयर्थ्य॥तदभावेहैहेप्रग्रहत्रेपंचमील्यब्लोपनिमित्तावा॥हेहेप्रयोगे॥हैहेंतइत्येवेति॥ प्रत्यभिवादेशूद्रेभोराजन्यविशांवेतिवाच्यंदूरात्धूतेचेत्येतत्त्रयविषणस्यानंत्यार्थतापातइत्याशयात्॥एतत्त्रयविषयमेवेति॥ प्रकृतसूत्रेचैवंवृत्तिग्रंथः प्रत्यभिवादेदूरात्धूतेचेत्यादिनायःप्लुतोविहितस्तस्यैवायंस्थानिविशेषमित्यर्थः॥वृत्तौस्पष्टमिति॥

षउच्यतइति॥आदिनाभोराजन्येत्यस्यसंग्रहः॥अनुदात्तंप्रश्नांतइतिसूत्रेना नेनप्लुतोविधीयते॥ किंतुदूरात्धूतादिषुविहित
स्यप्लुतस्यानुदात्तगुणमात्रंविधीयतइति॥एतद्धिहितानामेवेति॥एतदभ्यनुज्ञातानामेवेत्यर्थः॥पूर्वहृत्तिग्रंथेनास्यस्यानिविशे
षमात्रलाभादितिबोध्यं॥त्रिपाद्यांनप्रवर्ततइति॥तन्मतस्तित्वकरणात्॥अप्लुतवदुपस्थितेइतिवदेदिति॥यत्तुप्लुतनिषेधस्य
त्रिपादीस्थत्वेनाऽसिद्धत्वात्प्लुतप्रगृह्याइतिप्रकृतिभावेसंहिताकार्यंनस्यात्॥प्लुतनिषेधस्तुश्रवणार्थस्यादितितन्न॥प्रकृति
भावदृष्ट्याप्लुतस्याश्रयात्सिद्धत्वेनतस्यचलक्ष्येऽदर्शनेनप्रकृतिभावाप्रवृत्तेः॥नहिनिषेधोनदृश्यतइत्येतावतातेनलक्ष्येऽप्रवृ
त्तिःप्लुतोलक्ष्येऽस्तीतिबुद्धिःप्रकृतिभावशास्त्रस्यसंभवतीति॥नचपर्युदासेप्येतद्दूषणतौल्यं॥किंचप्लुतप्रकरणोत्तरंनोपस्थित
इत्युक्तेसंहितायामित्यस्यसंबंधोनस्यात्ते नचतयोर्ग्वावचीत्यतः संहितायामित्यस्यसंबंधइतिवाच्यं॥एवमपिपर्युदासेप्लुत
स्योदात्तस्यस्थानेआंतर्यादप्लुतादेशउदात्तोभवतिनोपस्थितइत्युक्तौउदात्तस्यश्रवणंनस्यादितिविशेषः।मन्मतेसंहितायाइत्य
स्यसंबंधासंबंधाभ्यांविशेषः॥वत्करणेप्युक्तन्यायेनपर्युदासमेवस्थिरीकृत्यशंकते॥नचेति॥परत्वादिति॥प्लुतत्वप्रयुक्तप्रकृति
भावापवादत्वेपिप्रगृह्यत्वप्रयुक्तप्रकृतिभावानपवादत्वाद्धिप्रतिषेधोपपत्तिः॥इदमयुक्तं॥शास्त्रातिदेशेदीर्घस्यपरत्वाभावा

त्कार्यातिदेशोपिस्थानिवत्सूत्रेपरिवीरित्यत्रोक्तातिदेशात्तस्यतत्त्वाभावात्॥अंतरंगत्वादिति॥इदमप्ययुक्तं॥नधातुलोपइति
सूत्रेंऽतरंगनिषेधदृष्ट्यागुणस्यासिद्धत्वेनोपेत्य इत्यादौगुणः प्रवर्ततइतिभाष्योक्तरीत्याप्रकृतिभावेनदीर्घबाधानापत्तेः
किंचवत्करणाभावेप्यप्लुतशब्देनप्लुतस्यस्थानेविहितस्यदीर्घस्योक्तदिशावारणेवत्करणवैयर्थ्यंतदवस्थं॥वस्तुतस्तुप्रकृतिभा
वेनतुल्यापेक्ष वहिरंगस्यापिनिवृत्तिः॥उपसर्गादृतीतिसूत्रेधातावितियोगविभा गेनपुनर्वृद्धिविधानात्ज्ञापकात्॥तेनसु
स्वार्तइत्यत्रपक्षेवृद्धिनिवृत्तिसिद्धेरितिएकादिक्॥नशब्दमर्यादयालाभइति॥इदमप्ययुक्तं॥अचःपरस्मिन्नितिवत्तृतीयादि
षुभाषितपुंस्कमितिवच्चाप्लुतौयथाप्लुतकार्यंनप्रवर्त्तयतितथाप्लुतोपीत्यभावातिदेशांगीकारेणोक्तार्थलाभसंभवात्॥तदेतद पा
भिप्रेत्यभगवद्भ्यांभाष्यकारवार्तिककाराभ्यामुक्तं॥वद्वचनंप्लुतकार्यप्रतिषेधार्थंवद्वचनंक्रियतेप्लुतकार्यप्रतिषेधार्थमिति॥ईदू
देत्॥एकारस्यगंगेइत्येकमेवोदाहरणमुपन्यस्यपुनरुदाहरणांतरोपन्यासस्यफलंवक्तुमवतारयति॥एदंतमिति॥अर्थवत्वा
दिति॥अनाङितिपर्युदासेनार्थवतएवग्रहणादितिभावः॥एतेनेदमदसोरकोरितिप्रतिषेधेनवर्णग्रहणेर्थवत्परिभाषायाअ
प्रवृत्तिज्ञापनादिदमप्ययुक्तमित्यपास्तं॥पर्युदासपक्षेदोषमाशंक्यनिराकरोति॥वासुदेवे॥अमिति॥अत्रप्रगृह्यत्वेपिपदांत

त्वाभावेनप्रकृतिभावाप्रवृत्तेरयुक्तमेतत्॥नचामूइ तएतेइत्यत्रप्रकृतिभावापत्तिरित्याशयः॥अव्ययीभावस्यसमासांतर
घटकत्वेविवादात्॥इतिकेचित्॥एआईएतीत्यत्रप्रकृतिभावापत्तेरित्यन्ये॥नानुपपन्नमिति॥अन्येत्वनाङितिप्रसज्यप्रति
षेधएवयद्यमनाङितिप्रतिषेधंशास्तीतिप्रकृतसूत्रस्थभाष्यात्प्रतिषेधार्थीयमारंभइत्योत्सूत्रस्थभाष्याच्च॥प्रसज्यप्रतिषे
धएवायंतेनआईएइअत्रेत्यत्रपराद्विवद्भावेनप्राप्तमपिप्रगृह्यत्वंनगम्यमानप्रतिषेधाभिप्रायकत्वंतुनयुक्तंओषुयातंमरु
तइत्यादौपराद्विवद्भावेनप्राप्तप्रगृह्यत्वस्यनिषेधकाभावेनप्रवृत्तिसौलभ्येनप्रतिषेधार्थीयमारंभओषुयातंमरुतइत्यादिभा
ष्यग्रंथसंदर्भासंगतेः॥नचप्रतिषेधार्थत्वेओतश्च्विप्रतिषेधइतिवार्त्तिकानुत्थानमितिवाच्यं॥प्रतिषेधार्थीयाअपिओदंतस्य
प्रगृह्यसंज्ञायाःप्रतिबंधकाभावेनादौभवतीत्यत्रापिप्राप्तेः॥ओत् च्व्यंतेनास्यप्रवृत्तिरिति॥यद्यपिनिपातपदेनचादीनामर्थव
तामिवोपस्थितिरितिचाद्यंशेगौणमुख्यन्यायकार्यप्रवर्त्तता।च्व्यंतांशेतुनविशिष्टरूपोपादानमित्यर्थवद्ग्रहणपरिभाषागौणमु
ख्यन्याययोर्नप्रवृत्तिः॥च्व्यंतेमुख्यार्थासंभवश्च॥तथापिचाद्यंशेविशिष्टरूपोपादानमात्रेणप्रवर्त्तमानगौणमुख्यन्याययोऽमुख्या
र्थकेच्व्यंतेप्रगृह्यसंज्ञांव्यावर्त्तयतिभाष्यप्रामाण्यादित्याशयः॥अन्येतुगोभवदित्याद्यर्थेओतश्च्विप्रत्ययप्रतिषेधइतिवार्त्तिकमा

रब्धत्वमेव ॥ तत्प्रत्याख्यानपरं भाष्यं त्वेकदेशिनः ॥ ऋषिप्रा पादिनाऽगोरेवगोः सम भवत्तत्र च्छ्रुतेमुख्यार्थस्यैवसत्वेनिपातसं
ज्ञायागौणमुख्यन्यायेनवारणासंभवात् ॥ नचतत्रार्थेद्विरेवनेष्यतइतिवाच्यं ॥ तथासतिसंज्ञोपसर्जनीभूतास्तुनसर्वादयइत्या
दिवार्तिकभाष्यविरोधापत्तेः ॥ छंतांशेविशिष्टरूपोपादानाभावेनमुख्यार्थासंभवेनचगौणमुख्यन्यायप्रवृत्त्यसंभवाच्चेत्याह ॥ नि
पातइतिकिमिति ॥ मियोइतीत्यत्रप्रगृह्यत्वंमाभूत् ॥ यत्तुदेवोसीतिप्रत्युदाहरणं बृहच्छंदःस्वरेदत्तंतन्न ॥ अदोभवदित्यादावि
वलक्षणप्रतिपदोक्तपरिभाषयावारणसंभवात् ॥ ब्रह्मबंधवितिं ॥ वेदेआपाद्यमानप्रयोगाभावेनप्रगृह्यत्वस्यवैकल्पिकत्वेनचा
नार्षइतिव्यर्थमितिकेचित् ॥ तदधिकार्त्थमात्राकालइति ॥ ततोप्यधिककालव्यवधानेनोच्चारणंतुअर्थबोधानुपयोगित्वाच्छि
ष्टसंप्रदायविरोधाच्चहेयमेवेतिभावः ॥ उञः ॥ निपातएवेति ॥ नतुप्रत्याहारः ॥ उदित्येववक्तव्येञकारोच्चारणसामर्थ्येनकिंवत
स्यकृतसंप्रसारणस्यवेञइतिशब्दपरत्वेपिनप्रगृह्यत्वस्योपयोगः ॥ तुकप्रवृत्तेः ॥ नाप्युञादेशः ॥ तुगंतस्यानिर्दिश्यमानत्वात्
मानाभावादिति ॥ इदमयुक्तम् ॥ उञइत्यस्यावृत्त्यास्थानषष्ठ्यंतत्वस्यवाच्यवाचकभावसं बंधार्थकत्वकल्पनेगौरवेणप्र
यमांतार्थेऽस्याभेदेनान्वयस्यक्लृप्तत्वेनचविधेयविशेषणत्वस्यैवोचितत्वात् ॥ स्पष्टमेवलभ्यतइति ॥ अन्येतुयोगविभागाभावे

प्रगृह्यत्वस्योमादेशस्य च शाकल्यमतेन युगपत्प्रवृत्तौ तन्मते ऊँ इतीति रूपं तदन्यमते उ इति प्रगृह्यत्वस्य निपात एकाजनाङि
ति सामान्यशास्त्रप्रणयनेन तदन्यमतेपि सत्वनिश्चयेन स्मृत्यंतरानुसंधानद्वारा प्रगृह्यत्वांशे विकल्पासंभवेनादेशांश एव
स्मृत्यंतरानुसंधानद्वारा विकल्पपर्यवसानापत्तेः॥ यथा ऋतौ भारद्वाजस्येत्यस्या चस्तास्व दिति सामान्यशास्त्रप्रणयनेन क्र
दंते स्मृत्यंतरानुसंधानद्वारा नेड्विकल्पबोधकत्वं॥ न च प्रगृह्यपदानुवृत्तिवैयर्थ्यं तस्योत्तरत्रानुवृत्त्यर्थत्वेनोपपत्तेः॥ तथा चैक
योगत्वे शाकल्यमते ऊँ इत्येकमेव स्यात्॥ तदेतदुक्तं भाष्ये॥ शाकल्यस्य चाचार्यस्य मतेन ऊँ इति विभाषा यथा स्यात् ऊँ इति उ इतीति॥ त
दन्यमतेन निपात एकाजिति नित्यं प्रगृह्यत्वात् उ इतीति स्यात्॥ तदेतदुक्तं भाष्ये॥ अन्येषामाचार्याणां मतेन वेतीति॥ योगविभा
गेन उञः ऊँ इत्यनेन प्रगृह्यत्वस्य शाक ल्यमते विधानेन योगविभागेन सिद्ध प्रगृह्यसंज्ञाविज्ञानसामर्थ्यात्स्मृत्यंतरानुसंधान
द्वारा सामान्यशास्त्रसत्वेपि प्रगृह्यत्वांशे विकल्पः सिध्यति॥ द्वितीययोगेन तु सति प्रगृह्यत्वे एवादेशविकल्पः॥ तत्रापि शाकल्य
ग्रहणानुवृत्तिसामर्थ्यात्॥ ननु शाकल्यग्रहणानुवृत्तिः सति प्रगृह्यत्वे एवादेशो यथा स्यान्न त्वप्रगृह्यत्वे इत्येवमर्थः स्यात् न स्या
द्दिर्घोच्चारणसामर्थ्येन प्रगृह्यपदानुवृत्तिसामर्थ्येन च स त्येव प्रगृह्यत्वे आदेशाकल्पनासंभवात्॥ तस्माद्द्वितीययोगे शा

कल्पानुवृत्तिः सति प्रगृह्यत्वे आदेशविकल्पार्थत्वे वतत्वमित्याहुः॥ दीर्घोच्चारणवैयर्थ्यापत्तिश्चेति॥ असंहितायां तस्यचारिता
र्थ्याच्चिंत्यमेतदितिकेचित्॥ विकल्पमात्रसंबंधेपीति॥ शाकल्यपदसंबंधे प्रगृह्यपदस्यासंबंधे इत्यर्थः॥ अर्थाधिकारादिति
इदमयुक्तं॥ उञिति पदस्याप्रगृह्यत्वे शक्त्यभावात्॥ तस्मात्प्रगृह्यस्यादेशो योगविभागवैयर्थ्यापत्तेः॥ अप्रगृह्यस्यैवादेश इतिव
क्तुंयुक्तम्॥ विचारयंत्विति॥ इदमयुक्तमित्युक्तम्॥ मय्प्रत्याहार इति॥ ननु धातुः॥ विजात्येति॥ तच्चतदंतविधिसद्भावकृतं॥ नचे
त्यारभ्येतीत्यंतइत्येकोग्रंथः॥ अनभिधानमिति॥ नचास्तीदूतौसप्तमीतिप्रकृतसूत्रस्य भाष्यादितिभावः॥ आधेयार्थेवृत्तिरिति
एकार्थीभाववत्तेनसमासेवापीपदस्यवाप्यधिकरणकाम्यरूपार्थोपस्थितिजनकत्वादितिभावः॥ समासेजहत्स्वार्थायामिति॥
जहत्स्वार्थातुतत्रैवयत्ररूढिर्विरोधिनीतिभावः॥ मानाभावइति॥ नचनामार्थयोरभेदान्वय इतिव्युत्पत्तिभंगः गौरीपदार्थाधिक
रणत्वस्यभेदसंबंधेनाधिश्रयणेऽन्वयांगीकारात्॥ तथाचलक्षणाऽवश्यकीतिचेन्न॥ दधिपश्येत्यादिवदुपपत्तेः॥ नचतत्रैवात्रा
पिविभक्तिस्मरणेनशाब्दबोधेसप्तम्यर्थेपर्यवसन्नत्वंदुरुपपादं॥ नचाधिश्रयणक्रियायामेवगौरीपदबोध्याधिकरणत्वान्वयइ
तिवृहच्छेखरोक्तंयुक्तं॥ नामार्थधात्वर्थयोरपिसाक्षाद्भेदेनान्वयस्याव्युत्पन्नत्वात् इतिवाच्यं॥ आधेयार्थानुपस्थापकत्वेस

तिसप्तम्यर्थोपस्थितिजनकत्वस्यसप्तम्यर्थेपर्यवसन्नशब्दार्थत्वात्॥ प्रकृतेचलुप्तविभक्तिस्मृतिहेतुत्वेनगौरीपदस्यैवसप्तम्यर्थोपस्थितिजनकत्वात्॥ पंचकंप्रातिपदिकार्थइतिपक्षेगौरीपदस्यैवाधिकरणशक्त्युपस्थापकत्वाद्वा॥ पुनःप्रवृत्ताविति कार्यकालपक्षाश्रयणेनतुननिर्वाहः॥ अणोःप्रगृह्यस्येत्येतद्देशस्यप्रगृह्यसंज्ञादृष्ट्याप्लुतस्यासिद्धत्वेनप्रगृह्यसंज्ञानापत्तेः

॥ ✿ ॥. ✿ ॥ इत्याचार्यार्यकृतव्याख्यायांस्वरसंधिःसमाप्तिमियात्॥ ✿ ॥ ✿ ॥

॥स्तोश्चुनाश्चुः॥ पदस्येत्यधिकृत्येति॥ इदमयुक्तं॥ अपदांतस्यमूर्धन्यइतः प्रागेवैतदधिकारसमाप्तेः॥ संबंधेपिवाडःसीत्यादाविववैष्वधिकरण्येनान्वयेदोषाच्च॥ शादितिज्ञापकादिति॥ विश्न माचष्टे विश्न इतीत्यादौसंबुध्यंतेपदांतेशात्परतवर्गसंभवेनेदमप्ययुक्तमितिकेचित्॥ वैचित्र्यार्थइति॥ जश्त्वचर्त्वयोःप्रवृत्तिमंतरेणसच्चिदित्यादिसिद्धिरिहवैचित्र्यम्॥ निर्देशादिति॥ नचततएवश्चुत्वाभावसिद्धेःशादितिव्यर्थम्॥ विश्नाद्यर्थत्वात्॥ यत्तुनासिकास्थानाधिक्येनतोरित्यादिनापंचमाग्रहणमाशंक्यशादितिनिषेधाल्लिंगात्तुल्यास्यसूत्रेनासिकास्थानभिन्नंताल्वादिस्थानंगृह्य तइतिकश्चिदुक्तवान्तन्न॥ शाजश्त्वंप्रतिपाशपेत्यादौश्चुत्वनिषेधायशादित्यस्यावश्यकत्वात्॥ दिक्संख्येसंज्ञायामितितिनियमादाह॥ षडधिकेति॥ स्पष्टार्थमिति॥ समर्थ

सूत्रस्य कैयटरीत्या पदांतविधित्वमेव न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थमिति केचित्। परोनुना॥ सवर्णा
नसंतीति॥ एतदुत्तरमाहुरिति शेषः॥ अन्येतु तुल्यास्यप्रयत्नमिति सूत्रं यस्मात्प्रत्ययविधिरितिवत् यत्रानुनासिको विधीयते तत्र तु
ल्यास्यमित्युपतिष्ठत इत्यर्थकतया परिभाषारूपामपि अनुनासिकपदानुवृत्तेः॥ अनुस्वारस्य ययीत्यत्र च मंडूकप्लुत्याऽनुनासिक
पदमनुवर्त्तते तेन चतुर्मुखः कुंडं रथेनेत्यादौ न दोषः॥ न च महिष्ठानित्यत्र षकारस्य ऋकारापत्तिः॥ तस्य षकारेण सूत्रमते स्थानप्र
यत्नोभयसाम्यादिति वाच्यम्॥ भाष्यमते प्रयत्नभेदेनादोषात्॥ जश्त्ववारणाय स्थानिवत्वप्रवृत्तेरावश्यकतया तेनैवानुनासिकवारण
संभवाच्च॥ न च रेफे सानुनासिके षत्स्ट्रूस्प्रसंग इति वाच्यं॥ तस्य सानुनासिकत्वे मानाभावात्॥ यद्वा कैयटोक्तरीत्या स्थानेंतरतमपरि
भाषोपस्थानात् दोषाभावः॥ न च रेफे स्थानप्रयत्नाभ्यामंतरतमस्य ताभ्यामनंतरतमस्य चाप्राप्त्याऽन्तरतमपरिभाषाया अनुपस्थि
तिरिति वाच्यम्॥ व्यक्तिपक्षे प्रतिलक्ष्यमंतरतमानंतरतमयोः प्राप्तावेव तदुपस्थितावपि जातिपक्षे कतिपयलक्ष्येषु तयोः
प्राप्तिमात्रेणांतरतमपरिभाषोपस्थानस्य दुर्वारत्वात्॥ णकारस्य स्थानेन रेफांतर्येपि आभ्यंतरप्रयत्नेन तदभावान्नांतरतमत्वं स्थानप्र
यत्नाभ्यामांतर्ये हि अंतरतमत्वं॥ एवं कुंडं रथेनेत्यत्रापि अनुस्वारस्य स्थानेन रेफः॥ रेफस्यानुस्वारेण स्थानसाम्याभावेनांतर्याभावात्॥

तथाचायंनिष्कर्षः॥यत्रस्थानप्रयत्नाद्यनेकधर्मकृतांतर्यसंभवस्तत्रशास्त्रेतमप्प्रत्ययघटितमंतरतमइत्युपतिष्ठते॥यत्रत्वेकैकध
र्ममात्रकृतांतर्यसंभवस्तत्रतमप्रहितमंतरइत्युपतिष्ठते॥यत्रतस्याप्यसंभवस्तत्रनोपतिष्ठतएवपरिभाषा॥नचैवंनेतेत्यादावेवगुणः
स्यान्नचेतेत्यादावितिवाच्यं॥एकारस्यप्रमाणतईकारांतर्याभावेपिस्थानप्रयत्नाभ्यामिकारांतर्येणांतरतमत्वाक्षत्याऽदोषात्॥नहि
सर्वैरांतर्यैतमबर्थः किंतुस्थानप्रयत्नाभ्यामपि॥नचैवंह्रस्वेकारएवयण्स्यान्नदीर्घेतस्य स्थानप्रमाणाभ्यामांतर्येणतमप्प्रत्ययघ
टितपरिभाषोपस्थितेः॥एवंषट्सञ्ज्ञंतीत्यादौषशयोर्जश्त्वानापत्तिः॥स्थानप्रयत्नाभ्यामंतरतमेस्पर्शेजश्त्वचारितार्थ्यात्॥एवंपात्थ
सतीत्यादौझयोह इतिपूर्वसवर्णानापत्तिः॥स्थानप्रयत्नाभ्यामंतरतमेवाकुघरिरित्यादौतस्यचारितार्थ्यादितिवाच्यम्॥ल्वादिभ्यइति
निर्देशेनझय्प्रत्याहारपरित्यागेनहल्प्रत्याहाराश्रयणेनव्याख्यानेनचतत्रव्यक्तिपक्षाश्रयणेनादोषात्॥तत्रपक्षेदीर्घादिव्यक्तिष्वंत
रतमानंतरतमयोरसंभवेनसकलांगसहितायाउक्तपरिभाषायाअनुपस्थितेः॥सवर्णग्रहणापकर्षस्तुनरेफोष्मणांसवर्णानसंतीति
भाष्याभिप्रेतः॥तपरतत्रप्रत्ययादित्युभयोःशेषइत्यादिभाष्येणापकर्षस्यभाष्यकारासंमतत्वावगमात्॥दूरेतराबहुसूत्रैर्व्यवहितेऽ
पकर्षादर्शनमित्यादौउक्तरीत्यापरसवर्णवारण संभवात्॥ययीतिनकर्त्तव्यमित्याद्यायेनरेफोष्मणामितिभाष्येऊष्मग्रहणमित्याहुः॥प्रा

चुर्यस्य स्वसमानाधिकरणस्वसजातीयाल्पत्वसापेक्षत्वनियमादाह स्वार्थिक इति॥ वस्तुतस्तु प्रचुरप्रकाशो रविरित्यादौ उक्तनियमव्यभि
चारात्प्राचुर्येपि मयट् तद्रूपपादः॥ सामानाधिकरण्यमिति॥ प्राचुर्ये मयटि त्वन्नमयो यज्ञ इत्यादावन्नयज्ञयोरिव चिद्ब्रह्मणोर्भेद एव
स्यां न्नाभेदरूपं सामानाधिकरण्यमित्यर्थः॥ हलो यमां यमीति सूत्रे इति॥ हलो यमां यमीति सूत्रेऽस्माभिरुक्त इत्यर्थः॥ एतेन हलो य
मां यमीति सूत्रस्य भाष्यकृताऽनुपादानादिदमसंगतमित्यपास्तं॥ नादिन्याक्रोशे इत्युत्तरं क्रमेणोदः स्थास्तंभोः शम्छोटि अभ्यासे चर्च
झरो झरीति सूत्राणां भाष्यकृतोपादानात्तथा पाठो भाष्यकृत्संमत इति भावः॥ न्नाप नादिति॥ व्यंजनपरस्यैकस्यानेकस्य वोच्चारणे विशे
षाभावात्पूर्वत्रासिद्धमद्विर्वचन इति द्वित्वदृष्ट्या पूर्वसवर्णस्यासिद्धत्वात्परत्वात्पूर्वसवर्णप्रवृत्त्या सकृद्गतिन्यायेन पश्चात् द्वित्वाप्रा
प्तौ द्वितकारस्य रूपस्य लोपपूर्वसवर्णयोरविशेषाद् इति भावः॥ अनुस्वारस्य ययि॥ ननु शकारसवर्ण ईकारः प्रसिद्ध इत्याशंक्याह॥ प्रय
त्नभेदेनेति॥ यथासंख्यमनु॥ संख्यासंख्यानं गणनमुच्यते। अनुदेशशब्दस्य संबंधिशब्दत्वादुद्देश्यमाक्षिप्तस्तेनायमर्थः॥ समानां समसंख्यानां
मध्ये यथागणनं उद्देशिभिः सहानुदेशिनः संबध्यंते इति कैयटोक्तं तु न युक्तं समूलाकृतजीवेषु हलो यमामित्यादौ उद्देश्यानामपि परस्प
रं यथासंख्यस्येष्टत्वादित्यभिप्रेत्याह॥ सम्यक्ख्यानमिति॥ वस्तुतस्तु कैयटोक्तार्थ एव युक्तः॥ सर्वस्योद्देश्यस्य सर्वानुदेशः प्राप्नोतीति

यथासंख्यसूत्रस्यभाष्यस्वरसादनुदेशपदस्याजहत्स्वार्थलक्षणयाविधेयतदन्वय्युभयपरत्वान्नोक्तस्थलेषुदोषः॥संबंधोयेनेति
संबंधइत्यपपाठः॥पदज्ञानंपदादुपस्थितिर्वेति॥आद्यस्योदाहरणं॥समूलाकृतेत्यादि॥द्वितीयोदाहरणंपरस्मैपदानामित्यादिस्थाना
ख्येति॥स्थानमत्रक्रमः॥स्थानाच्चेतितिसंयोगादितिसूत्रेआध्वरमीमांसकैस्तथैवव्याख्यातत्वात्॥एतेनस्थानमधिष्ठानमित्यभिप्रे
त्ययत्पाठकेनोक्तंतच्चस्थानेंतरमसूत्रेयान्येतानिगोयुक्तकानिसंघृष्टकानिभवंतितान्यन्योयंपश्यतिशब्दंकुर्वंतिएवंसा वत्‌चेतनाव
त्सुअचेतनेष्वपिलोष्टक्षिप्तवायुवेगंगत्वानैवतिर्यग्गच्छतिनचोर्ध्वमारोहतिपृथिवीविकारःपृथ्वीमेवगच्छतीत्यादिनासूत्रप्रत्याख्याना
यानेकधाप्रदर्शितमितितत्पूर्वमीमांसाऽनध्ययनविजृंभितमितिस्पष्टमेव॥लौकिकेति॥शत्रुंमित्रंविपत्तिंचजयरंजयभंजयेत्या
दौलोकेक्रमेणान्वयदर्शनादितिभावः॥परस्मैपदानामित्यादि॥परस्मैपदानामित्यत्रक्रमेणनोद्देश्यवाचकपदानामुपादानंनापिपर
स्मैपदपदादुद्देश्यानांक्रमेणोपस्थितिः किंतुयुगपदेवसर्वेसंज्ञिनःप्रत्याय्यंतइतिनस्थानाख्यलौकिकप्रामाण्याद्व्यवस्थासंभवः॥एवंद्व
न्द्वेनक्रमेणान्वयप्रदर्शनादितिभावःतथान्वयेद्वंद्वस्यैवासाधुत्वात्सहविवक्षायांतस्यविधानात्॥ननूक्तपरिभाषयापिकथमत्रव्यवस्था
येनक्रमेणपदज्ञानंपदादुपस्थितिर्वेत्युक्तपरिभाषार्थस्योक्तरीत्यापरस्मैपदानामित्यत्रासंभवात्॥एवमेचोऽयवायावइत्यत्रापि॥एते

नपदादुपस्थितिरित्यस्यपरस्मैपदानामित्युदाहरणमित्यपास्तं॥किंचपरस्मैपदशब्देनतिबादीनामिवशतृक्वसोरुपस्थित्यानसंख्यासा
म्यं॥आद्यंतौटकितावित्यत्रापिययोरर्थयोराद्यंताभ्यांक्रमेणान्वयोनतयोःक्रमेणोपस्थितिः॥नापितत्बोधकपदयोःक्रमेणोपादा
नं॥टित्कितावित्यनुक्तेः॥ययोःक्रमेणोपादानंटकारककारयोर्नतयोराद्यंताभ्यांक्रमेणसंबंधइतिचेत्सत्यंकैयटोक्तार्थाश्रयणेनादो
षात्॥तथाहिलादेशानांपरस्मैपदसंज्ञाविधानेनतज्ज्ञानार्थंतिबादिसूत्रानुसंधानेतत्रपरस्मैपदानांतिबादीनांगणनाक्रमेणोद्देश्या
नुद्देशिनोःसंबंधांगीकारात्॥शतृक्वसोःपरस्मैपदत्वेपिअसंनिहितत्वात्संनिहितानांतिबादीनांचनवत्वात्संख्यासाम्योपपत्तिः॥आद्यं
तावित्यत्रापिटकारस्यप्रथमोपादानात्तद्घटितस्यटितःप्रथमंगणनापश्चात्कितइतिगणनाक्रमेणैवसंबंधः॥असहविवक्षायामपि
द्वंद्वस्यसाधुत्वंच॥नव्यमतेपितिबादिसूत्रस्यक्रममादायपरस्मैपदानामित्यत्रटित्किद्वटकटकारककारयोःक्रमेणोपादानमादाया
द्यंतौटकितावित्यत्रचयथासंख्यशास्त्रप्रवृत्तिःकथंचिदुपपादनीया॥यथासंख्येनान्वयइतिसंख्यानतिक्रमस्यकरणत्वविवक्षयातृती
येतिकेचित्॥संख्यामनतिक्रम्यान्वयबोधइत्यर्थस्याविवक्षितत्वेनतृतीयार्थस्यानुपयोगेनान्वयासंभवेन चायुक्तमेतदित्यन्ये॥भाष्ये
तुसंख्यातानुदेशइत्युक्ते॥तस्यार्थःसंख्यातंगणितंतत्क्रमेणानुदेशोविधिरित्यर्थः॥अपकृष्यतइति॥तथाचयत्रस्वरितेनयुक्तंशब्द

स्वरूपं तत्रैव यथासंख्यशास्त्रं प्रवर्तत इत्यर्थः॥ नन्वेवमप्यनुदात्तङितआत्मनेपदमित्यादौ संख्यातानुदेशाद्दुर्वार आत्मनेपदशब्दे उत्तरत्रा
नुवृत्त्यर्थं स्वरितत्वस्यावश्यकत्वादिति चेन्न॥ ययोर्यथासंख्यमन्वयस्तयोर्द्वयोरपि स्वरितत्वसत्त्व एवैतच्छास्त्रप्रवृत्त्या ऽनुदात्तशब्दे तद
भावेनादोषात्॥ रुध्यत्यादित्यादाविति॥ नन्वत्रयथयोरन्वयेप्यल्पयोरकारस्य चतस्यः संख्यासाम्यं ययोश्च संख्यासाम्यं रुध्यत्ययोर्ङिसिङसोश्च नतयो
साक्षादन्वय इति न संख्यातानुदेशः प्राप्नोति॥ एवमेवानुदात्तङितः रदाभ्यां निष्ठातः श्नसोरल्लोपः ङसिङसोश्च विदिभिदिच्छिदेः कुरच् अ
वेस्तिस्योरोपधेतोः ऋतुयज्ञेभ्यश्चेत्यादावपि न संख्यातानुदेशः॥ अनुदात्तङित इत्यस्य लसेत्यनेन रदाभ्यामित्यस्य तइत्यनेन सार्वधा
तुक इत्यस्यात इत्यनेन ङसिङसोरित्यस्यातीत्यनेन ताच्छीलादीनां कुरच् करणाधिकरणयोरिति ससघञापयिदूतयोरित्यस्य उञा व्याख्या
न भवयोश्च ञासाक्षादन्वयादिति चेन्न परंपरासंबंधेप्यस्य प्रवृत्तेः॥ अन्यथा समूलाकृतजीवेषु स्यतासीलृलुटोरित्यत्रापि एतदप्रवृत्त्याप
त्तेः॥ तत्रहिलृलुटोरित्यस्य धातोरित्यनेन समूलादीनां च णमुला साक्षादन्वय इत्याशयात्॥ इदं च व्यक्तिभेदेपि धर्मसाम्यमात्रेण प्रवर्तते॥
तेन स्यतासीलृलुटोर्नदिप्रहिपचादिभ्य इत्यादौ संख्यातानुदेशः सिध्यति॥ लृलुटोर्नद्यादीनां भेदेपि लृत्व नंद्यादित्वरूपधर्मसाम्यात्
भाष्ये स्पष्टमिति॥ तत्रहीत्थं भाष्यं॥ किमर्थमिमावनुनासिकावुभावनुबध्येते न ञकार एवानुबाध्येत कथं ङमोह्रस्वादचीति एतदप्यस्तुञ

कारेणनैवंशक्यंझकारभकारयोरपिपदांतयोर्झकारभकारौआगमौस्याताँ॥ नझकारभकारौपदांतौस्तएवमपिपंचागमास्त्रयआगमिनो
वैषम्यात्संख्यातानुदेशोनप्राप्नोति॥ संतुतावदेषामागमानामागमिनः संतिझकारभकारौपदांतौनस्तइतिकृत्वाआगमावपिनभविष्यत
इति॥ नित्यानुनासिकापत्त्येति॥ ननुतद्वानित्यत्रनानुनासिकः॥ कंठावच्छिन्नवायुसंयोगेनोत्पन्नेषुनासावच्छिन्नवायुसंयोगेनतद्रूप
धर्मोत्पत्त्येत्यादिस्वग्रंथपर्यालोचनयावकारस्यनासिकास्थानत्वाभावेनमुखसहितनासिकयोच्चार्यमाणवर्णत्वाभावात्अनुनासिक
संज्ञायाअभावादनुनासिकादिप्रत्ययपरत्वाभावेनचकथमनुनासिकापत्तिः॥ आङोनुनासिकोछंदसि अनुनासिकइत्यादौतुलोकसि .त्था
नुनासिक्यगुणस्यैवविधानमितिनकश्चिद्दोषइतिचेत्सत्यं॥ वर्णमात्रस्यनासावच्छिन्नवायुसंयोगेनानुत्पत्तावप्यानुनासिक्यगुणविशिष्ट
स्यतथात्वेनानुनासिकसंज्ञेत्याशयेनास्यकथंचिद्योजनीयत्वात्॥ एतत्सामर्थ्यादिति॥ इदमयुक्तम्॥ अप्सरावत्साइत्यादावेतस्यचारि
तार्थ्यात्॥ तत्रहिअपूर्वात्सर्तेरसिः वदेः सः ततश्चत्वेएवसस्यसित्वधत्वाश्रयणेनैतस्यप्रवृत्तेः॥ तयोरव्युत्पन्नत्वेपिखरिचेत्येतद्रूपवा
दत्वादेवास्मिन्कृतेनतस्यप्रवृत्तिः॥ ऊष्मोदयमूष्मपरं॥ ङमोह्रस्वादचि॥ आवृत्त्येति॥ इदमयुक्तं॥ ङमंशेपदस्येत्यस्यवैयधिकरण्येना
न्वयेऽनुपपत्तेः॥ पदाधिकारस्यविशेषत्वादितिभाष्यंतुअधिकारप्राप्तस्यत्यागायोगादुपरंजकतयान्वयप्रदर्शनपरं॥ वस्तुतस्तुपदस्ये

तिविशेषणस्यप्रयोजनंवक्ष्यामः॥उभयोःसप्तम्यंतत्वेएवेति॥इदमप्ययुक्तं॥तीषसहेत्यादौतदादिविध्यनापत्तेः॥ङःसीत्यादौपदाधि
कारस्यविशेषणत्वेनलिट्स्त्वित्यादौधुट्स्तित्थावस्यार्थस्यानुपयोगाच्च॥वलादेरित्यादिग्रहणंत्वचिक्ष्मुइतिवत्वलिपरतआर्धधातुक
स्येत्यर्थप्रतीतिवारणायपदस्येत्यधिकृतस्यानुवृत्त्यैवनिर्वाहेभाष्यकारीयमंडूकप्लुत्याउञिचपदेइत्यतःपदेइत्यस्यानुवृत्त्याश्रयणंतु
ङमइत्यस्यषष्ठ्यंतत्वाश्रयणेनाजादौपदेङोङमुडित्यर्थाभिप्रायकंङमइत्यस्यपंचम्यंतत्वेहिअचीत्यस्यषष्ठ्यंतत्वकल्पनास्या
त्॥अजादेःपदस्यङमुडित्यर्थेतुप्रत्यङ्ङ्यैइत्यादौसमासेङमुडापत्तिः॥आद्यंतौटकितावित्येतदेकवाक्यतयास्यापिपदादिविधित्वा
न्॥अपदादिविधावित्यत्रोपपदविभक्तेरितिन्यायेनकर्मषष्ठीत्वस्येवापत्तेः॥कार्यित्वमिति॥पदत्वइत्यस्यपदत्वप्रयुक्तेकार्येइत्यर्थ
इतिभावः॥इदमुपलक्षणं॥अपदादिविधावितिपर्युदासेनपदांतविधावेवैतत्प्रवृत्तेः॥ननुपूर्वदंडिप्रियइत्यादौनलोपार्थमावश्यके
नमध्यमत्वानाक्रांतइतिविशेषणेनैवमाषकुंभवापेनेत्यत्रपदव्यवायेपीतिनिषेधःसिध्यतीतिउत्तरपदस्ययत्रकार्यित्वमित्यर्थाश्रयणं
व्यर्थमितिचेदत्राहुः॥यणादिपरमितिनिर्देशेनमध्यमत्वानाक्रांतेत्यस्यपूर्वपदाघटकत्वविशिष्टंयन्मध्यमत्वंतदनाक्रांतेइत्यर्थः॥त
त्फलंतुप्रत्यङ्ङर्थकृतमित्यादौनङमुट्॥एवंचमाषकुंभवापेनेत्यादौमाषकुंभस्यवापइतिविग्रहेपूर्वपदाघटकत्वविशिष्टमध्यमत्वाना

क्रांतत्वस्यकुंभपदेसत्वेनप्रत्ययलक्षणप्रतिषेधवारणायोत्तरपदस्ययत्रकार्यित्वमित्यर्थआवश्यकइति॥ नचैवमुक्तवार्तिकप्र
त्याख्यानेनफलेभेदइतिवाच्यम्॥ तत्पक्षेपियणादिपरमितिनिर्देशेनप्रत्यङ्‌र्थकृतमित्यादेोङ्‌मुडभावकल्पनात्॥ नचैवंकर्म
धारयपूर्वपदकेपरमदंडिप्रियइत्यादिबहुव्रीहौनलोपानापत्तिरितिवाच्यं॥ परमदंडीतिसमुदायगतपदत्वमादायतत्सिद्धेः॥ नच
पदव्यवायेपीत्यत्रपदपदंपदत्वयोग्यपरं॥ नपदांतेत्यादौतथैवस्वेनव्याख्यातत्वात्॥ तयाचकार्यित्वनिवेशोव्यर्थइतिवाच्यं॥ पद
त्वयोग्यत्वंयदिप्रातिपदिकसंज्ञकत्वं॥ पिबभवेतियस्यांक्रियायांपिबभवासुंदरा पिबभवायेषांसुंदरपिबभवानामित्यादौपिवेत्या
देः प्रातिपदिकत्वाभावेनपदव्यवायेपीतिनिषेधानापत्तेः॥ यदिचप्रातिपदिकत्वतिङ्‌तत्वेतदन्यतराश्रयत्वंतदागौरवं॥ माषकुंभ
वापेनेत्यत्रगतिकारकोपपदानामित्यस्यानित्यत्वेनसुबुत्पत्त्यनंतरमेवसमासाश्रयणेनपदपदस्यपदत्वयोग्यार्थकत्वाभावेपिनदो
षः॥ स्फष्टीभविष्यतिचैतत्सर्वंसमासप्रकरणेशेखरे॥ सौत्रोनिर्देशइति॥ यत्तुतयोर्य्वावचिसंहितायामितिसंहिताधिकारस्यप्रक्रांत
त्वेपिवाक्येचसंहितायांवैवक्षिकत्वेनङ्‌मुडभावोपपत्तेरिदमसंगतमितितन्न॥ वाक्येसंहितायांवैवक्षिकत्वेपिसंहिताधिकारस्यं
कार्याघटितनिर्देशस्यप्रायशोऽनुपलंभेनासंहितायांनिर्देशेप्रयोजनाभावेनच संहितायाअविवक्षाकल्पनायोगात्॥ नचैवमजादे

पदेङ·मोङ·मुडित्यर्थेभाष्यसंमतेप्रत्यङ·र्थेद्रुत्यन्नङ·मुडापत्तिः॥उत्तरपदस्यकार्यित्वाभावेनप्रत्ययलक्षणनिषेधादितिवाच्यं॥उणादयो
बहुलमितिनिर्द्देशेनङ·मुटिउत्तरपदस्यकार्यित्वेऽपिप्रत्ययलक्षणनिषेधाश्रयणात्॥अन्येतूणादयोबहुलंयणादिपरंसनाशंसभिक्ष
उरित्यादिनिर्द्देशेनङ·मुटोऽनित्यत्वंज्ञाप्यते॥तेनाणादिसंज्ञार्थानिअप्लुतकार्यंयणादिकंकरोतियङं·तप्रक्रियेत्यादिप्रयोगाणांसिद्धिः
नपदांतसोपदादौपदव्यवायेपीत्यादौपदपदंपदत्वयोग्यपरंयद्वागतिकारकोपपदानामित्यस्यानित्यत्वेनसुबंतेनैवासमासांगीका
रात्पदपदंयथाश्रुतार्थकमेव॥उत्तरपदस्यकार्यित्वएवेतिनिवेशस्तुप्रकृतसूत्रस्यभाष्यविरुद्धइतिमाषर्कुभइत्यादौनदोषइत्याहुः॥
ननुगणेशोवनेशइत्यादौअसमासेङ·मुट्दुर्वारः॥परादिवद्भावेनैशइत्यस्याजादिपरत्वात्ङ·मः परत्वाच्च॥नचपंचमीसमासाश्रयणे
नवास्यानिवद्भावः॥पूर्वत्रासिद्धेनस्थानिव दितितन्निषेधात्॥नचत्रिपाद्यांनांतादिवद्भावः॥क्षीरपेणेत्याद्यसिद्धेरितिचेन्न॥पदाऽव
यवङ·मोऽभावेनादोषात्॥नचपूर्वांतवद्भावेनैकारांतस्यपदत्वं॥उभयतआश्रयणेनांतादिवदितिनिषेधात्॥तस्यपौर्वापर्याश्रयण
कत्वेपिपदेत्यस्यावृत्त्याऽजादौपरेयत्पदंतदवयवस्यङ·मः पदेपरतोङ·मुडित्यर्थाश्रयणेनोक्तनिषेधप्रवृत्तेःसुलभत्वात्॥पदावय
वङ·मः परस्याजादेः पदेङ·मितिव्याख्यानेपियथाकथंचिदत्रङ·म्विशेषणस्यपदस्यविशेष्यपदभिन्नस्यैवग्रहणेनादोषात्॥एतेनङ·

मः पदस्येति विशेषणं व्यर्थमित्यपास्तं॥ नचैकदेशविकृतन्यायेन नांतस्य पदत्वं॥ अनचकइद्रः संपन्न इत्यादिभाष्यप्रामाण्येन स
मासांत इत्यादिनिर्देशेन चैकादेशरहिते एकदेशविकृतन्यायेन पदत्वाद्यप्रवृत्तेः॥ तेन वनांतः सांत इत्यादौ नलोपरुत्वादि न॥ अत्रा
नुनासिक॥ अत एवेति॥ अत्रेत्यनेन रुप्रकरणस्यैव ग्रहणं न तु रोरेवेति हेतोरत्रेत्यर्थः॥ न च समः सुटीत्यादिना रोर्विधाने त्रेत्यनेन रोर्ग्र
हणं संविधानेपि तस्यैवेति रुप्रकरणग्रहणेनेदं तत्साधकमिति वाच्यं॥ समः सुटीत्यत्र सकारप्रश्लेषपक्षेपि दीर्घादटीत्यनेन रोरेव वि
धेयत्वात्॥ अन्यथा महांइ इत्यत्र सत्वस्यासित्थत्वाद्यप्रवृत्तौ रूपासित्धेः॥ वस्तुतस्तु सकारप्रश्लेषपक्षेऽत्रेत्यस्य सप्रकरण इत्येवार्थो
न तु रुप्रकरणे इति॥ कानाम्रेडित इत्यत्र रुप्रकरणस्य विछिन्नत्वेन तद्विषयेऽनुनासिकापत्तेः॥ अधिकारपक्षे रोः पूर्वस्येत्यर्थोऽसं
भवी पूर्वस्य नित्यं रुत्वं पूर्वस्य तु वानुनासिक इत्युक्तरीत्या रुणा सहैवानुनासिकविधानेनानुनासिकविधानकाले रोरभावाद त आह
रोः पूर्वस्येत्यस्येति॥ अनवयव एवेति॥ आगमत्वं च प्रत्ययादेशभिन्नत्वे सति साक्षाल्लक्ष्यसंस्कारकतया शास्त्रविहितत्वं॥ एवमेव न
य्वाभ्यामिसूत्रविहितयोरप्यनवयवत्वं नय्वाभ्यामिति पंचमीनिर्देशेन पूर्वशब्दस्य तत्रावयववाचित्वाभावात्॥ तेन दध्यश्व अचच
यजंतस्यापत्यं ऐयजित स्यक्षात्रा इत्यर्थः णेव न तुक इति भावः विसर्गाक्षिप्तेति॥ इदमयुक्तं॥ आक्षिप्तस्य शाब्देऽनन्वयात्॥ किंतु भा

ष्योक्तरीत्यानिर्वाहोबोध्यः॥केचित्त्ववसानेरेफस्यविसर्जनीयःखरितस्यसोविधेयः॥शर्परेइत्यादिविसर्गस्यानिर्कंकार्येरेफस्यैवविधे
यमित्याहुः॥अप्राप्तिरेवेति॥अत्र विसर्गेप्राप्तेइतिमूलंपुमःखयीतिसूत्रेपक्षभेदेन? कःपयोःषत्वस्यचप्राप्ताविति मूलंयदि सत्वंन
विधीयतेकिंतुरुत्वमेवतदेत्यर्थकमेवेतिबोध्यं॥अतएवरुप्रकरणस्यग्रहणादेव॥दोषत्वेननोक्तेति॥इदमुपलक्षणं॥समोवालोप
मेकइत्यस्य॥संस्कर्त्ता॥सँ सस्कर्त्तेत्यनुनासिकानुस्वारघटितरूपस्योदाहरणत्वेन प्रदर्शनादित्यपिबोध्यं॥अपास्तमिति॥इदमुप
लक्षणं॥नश्छव्यप्रशानित्यादेौपक्षेनकारस्यश्रवणापत्तिरित्यपिबोध्यं॥पूर्वप्रवृत्त्येति॥इदमयुक्तं॥पूर्वत्रासिद्धीयमद्विर्वचनइति
परिभाषयापरद्वित्वस्यैवपूर्वप्रवृत्तेर्युक्तत्वात्॥त्रितस्यनिर्वाहइति॥केचित्त्वेकस्यांव्यक्तावितिन्यायेननपुनर्द्वित्वं॥लक्षणपदस्यका
र्यार्थकत्वात्॥अतएवसोषुप्यतेःसनिसोषुपिषतइतिअत्रद्वित्वस्योक्तन्यायेनाप्रवृत्याभाष्यकारीयानभ्यासग्रहणप्रत्याख्यानस्यनिर्वा
हइत्याहुः॥सूत्रविधेययोरिति॥तयोर्विधायकस्यशास्त्रांतरस्याभावादिदंव्यर्थं॥ननुघसेः किस्वेतीरनिकित्वादुपधालोपेजातस्यचर्त्व
स्यासिद्धत्वात्वप्रत्वमेवनास्तीत्याशंक्याह॥क्षरधातोरिति॥क्षीरंक्षरतेर्वाघसेर्वेतिनिरुक्तप्रामाण्यादितिभावः॥अवश्यंप्राप्ताविति पा
ठः॥लुंपेदवश्यमःकृत्येइतिकृत्येएवलोपस्मरणादितिबोध्यं॥भावेक्तइति॥नपुंसकेभावेक्तइतिविहितःगत्यर्थाकर्मकेतिविहितोवास

कर्मकेभ्योपि भवतीति भावः॥ अत्र यद्वक्तव्यं तत्त्रिपथगायामुक्तं॥ सवर्णकाल इति॥ वर्णसहितकाल इत्यर्थः॥ तदधिकेति॥ स्वारसि
कार्धमात्राकालात् योधिकोर्धमात्राकालस्तदधिकेत्यर्थः॥ अव्ययमेवेति॥ नतु धातुरित्यर्थः॥ ध्वनितमेतदिति॥ तत्र हि वर्णैकदेशा वर्ण
ग्रहणेन गृह्यंत इति पक्षे आलूयेत्यत्र ह्रस्वस्येति तुकमाशंक्याचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवति॥ स्वपदीर्घादिति
केतुकं शास्तीत्युक्तं॥ यदि चक्कस्यायं तुक् स्यात्तदानपूर्वेण सिद्धिः तेन ह्रस्वस्य तु विधानादिति बोध्यम्॥ स्थानिद्वारेति॥ इदमुरदित्येत
दभिप्रायम्॥ इति हल्संधिः॥ यद्यपि विसर्गस्यापि हल्त्वेन हल्संधावेवास्यांतर्भावः एवं स्वादिसंधेरपि तथापि ब्राह्मणवसिष्ठन्यायेन श्रोतॄणां
प्रतिपत्तिसौकर्याय पृथक् कथनं॥ श्रोतारो हि विसर्गस्थानिककार्यसंदेहे विसर्गसंधिप्रकरणमवेक्ष्य निश्चिन्वंति॥ एवं स्वादिस्थानिकका
र्यसंदेहेपि॥ अनुवृत्तिप्रदर्शनायेति॥ वस्तुतस्तु विसर्गस्थानिकसंधिकार्याणामुक्तरीत्या श्रोतृप्रतिपत्तिसौकर्यायैकत्रक्रोडीकारस्याव
श्यकतया पुनरुक्तिः॥ अत एव पूर्वमुक्तमपि झलां जशोंत इति सूत्रं हल्संधौ पुनरुक्तं॥ वक्ष्यति पूर्वमुक्तमपि कस्कादिषु चेति शास्त्रं॥ य
द्यपि झलां जशोंते इति शास्त्रं संहिताधिकारस्थं तथापि वर्णांतरेण संहितायां वावसान इत्यस्याप्रवृत्त्या जश्त्वश्रवणं निर्बाधमित्येतावता सं
धिकार्यत्वमस्य॥ अत एव तादृगेव वागीशश्चिद्रूपमित्युदाहृतमित्यलं प्रसक्तानुप्रसक्त्या॥ ५॥ खरे वेति॥ नावसानं॥ तस्याभावरूप

त्वेनवैजात्यादित्यर्थः॥अव्ययीभावश्चेत्यत्रभाष्येइति॥तत्रहिअव्ययीभावस्याव्ययत्वेउपपयःकारइत्यादौसत्वाभावःप्रयोजनमित्युक्ता
नैतदस्तिप्रयोजनंअनुत्तरपदस्थस्येतिप्रतिषेधोभविष्यतीत्युक्तं॥तेनानव्ययस्येतिवार्तिकेनसत्वप्रतिषेधेःव्ययत्वंनेतिलभ्यतइति
भावः॥वस्तुतस्त्वव्ययीभावस्याव्ययत्वेप्रयोजनंलुङ्मखस्वरोपचाराइतिपरिगणनारंभतत्प्रत्याख्यानयोःफलैक्यायेतस्यानभिधा
नं॥वाःकाम्यतीत्येतस्याप्यनभिधानं॥सोपदादावितिसूत्रेरोःकाम्येइतिवाच्यं॥किंप्रयोजनं॥निषमार्थपयस्काम्यतिक्षमाभूत्॥गीःका
म्यतिपूःकाम्यतीतिभाष्यात्॥अन्यथासंग्राह्योदाहरणंसत्वस्य॥व्यावर्त्यंतुषत्वस्यापीत्यर्धजरतीयापत्तिः॥इणः षः॥इदुदुपधस्ये
त्येवसिद्धेइदंव्यर्थमित्याशंक्याह।इदुदुपधस्येतिइतिचसंबध्यतइति।अतएवरोःकाम्येइत्यस्यगीःकाम्यतीतिविसर्गघटितंभाष्येव्यावर्त्यप्रद
र्शितं॥अन्यथासत्वस्याप्रवृत्तावपिषत्वस्यप्रवृत्त्यापत्यातदसंगतिः॥अतएवेति॥अनव्ययस्येत्यादेरुत्तरसूत्रेसंबंधादेवेत्यर्थः॥स
स्यानेनषत्वमितिकुप्वोःपरयोरितिशेषः॥अपदादिविधावितिचेत्यारभ्यषत्वसिद्धिरित्यंतोग्रंथःपूर्वेणगतार्थः॥असंगतइति।ष
त्वप्रकरणांतेइणःषइत्यस्यपाठेतुनकश्चिद्दोषइत्याहुः॥प्रकरणेति॥षत्वसत्वयोर्विधेययोर्भेदेपिकुप्वोरितिनिमित्तैक्यात्प्रकर
णैक्यंबोध्यं॥नमस्पुरसोर्गत्योः॥गतित्वाभावइति॥कृञायोगाभावेइतिशेषः॥कृञोयोगेतुऊर्यादित्वेननिपातत्वात्स्वरादिपाठंवि

नैवाव्ययत्वसिद्धिः॥तथाचनमःकरोतीतिविसर्गघटितमसाध्वितिभावः॥नमःशब्दांशेगतेरित्यस्यसंबंधफलंतुक्रियायोगाभावे
बोध्यं॥द्वित्रिश्चतुरिति॥इतिशब्दएषामित्यर्थे॥वक्ष्यमाणरीत्येति॥शब्दस्वरूपंविशेष्यमादायसुजंतस्येतिपुनःपदस्येतिविशेष्यमादाय
सुजंतांतस्येति॥तेनपरमद्विष्करोतीत्यत्रषत्वसिद्धिः॥सूत्रयितुमिनि॥ननुचतुःकरोतीत्यत्रैतस्यासिद्धत्वादिदुदुपधस्येतिनित्यष
त्वापत्तिः॥यथान्यासेतुविशिष्यचतुर्ग्रहणेननित्यषत्वस्यबाधः॥नचव्युत्पत्तिपक्षेप्रत्ययविसर्जनीयत्वात्तदप्राप्तिः॥चतुष्कपालमि
त्यादिसिद्धये ऽव्युत्पत्तिपक्षस्यैवाश्रयणीयत्वात्॥नचप्रकरणेप्रकरणमसिद्धंनतुयोगेयोगइतिपक्षाश्रयणेननिर्वाहः॥तस्येत
हृंष्यकृदभिमतत्वात्॥नचद्विःकरोतित्रिःकरोतीत्यनयोरिसुसोरित्येवसिद्धेचतुःकरोतीत्यत्रनाप्राप्ते ऽस्यापवादत्वंद्विःपाक
इत्यादौसमासेसामर्थ्यविरहात्॥इसुसोरित्यस्याप्राप्तौ अस्यावश्यकत्वादितिचेन्न॥कृत्वोर्थइत्यसस्थानेसुचइतिसूत्रयितुमुचितमि
त्याशयात्॥यद्वासुचइत्युत्तरंचतुरइतिन्यासःसुजंतस्यचतुरःषत्वमितितदर्थइतिनकश्चिद्दोषः॥स्थानिनिमित्तमिति॥तथाच
सस्येतिरेफस्याप्युपलक्षणमितिभावः॥नित्यषत्वापत्तेरिति॥अन्येतुलाघवात्द्वि स्त्रिरित्येववक्तव्येकृत्वोर्थप्रत्ययांतसामान्येप्रवृत्य
र्थकृत्वोर्थग्रहणाच्चतुःकरोतीत्यत्रनित्यषत्वंबाधित्वाविकल्पप्रवृत्तेरितिनकश्चिद्दोषः॥स्पष्टंचेदंप्रकृतसूत्रेकैयटे॥अथवासुचइ

त्येवंवक्तव्ये कृत्वोर्थग्रहणाच्चतुःशब्देपिषत्वं॥सुचइत्युक्तौहिनिर्दिश्यमानपरिभाषयासुचोविसर्गस्यैवषत्वंस्यात्नचतुःशब्दविसर्गस्येतिकृत्वोर्थग्रहणंकृतं॥एतेनसुचइतिसूत्रयितुमुचितमित्यपास्तं॥नचसुचतुर्ष्वंचाशादितिसुजर्थबहुव्रीहौषत्वानापत्त्यासुचइतिसूत्रयितुमशक्यमेवेतिकृत्वोर्थइत्यस्यनसुचइत्यनेनसमानफलकत्वमितिवाच्यं॥कृत्वोर्थइत्युक्तावप्यस्यासित्थत्वेनेदुदुपधस्येतिनित्यषत्वस्यैवोक्तस्यलेप्रवृत्याफलभेदाभावात्॥तदेतदभिप्रेत्यवार्तिककारभाष्यकाराभ्यांद्विस्त्रिश्चतुर्ग्रहणंप्रत्याख्यातमित्याहुः॥इसुसोःसाम॥तयोरेवसंभवेनेति॥अव्युत्पत्तिपक्षाश्रयणेनेदं॥इदमयुक्तं॥तदाश्रयणेहिजग्मुःपेचुरितियस्यांक्रियायामित्याख्यातमाख्यातेनेतिसमासेनित्यंसमासइतिषत्वापत्तेः॥एवंषष्ठ्याआक्रोशेइत्यलुकिसख्युःपुत्रइत्यत्रापिषत्वापत्तिःसुपीःपचतिसुभूःपचतीत्यादौप्रातिपदिकावयवयोरिसुसोःसामर्थ्यइतिषत्वापत्तिः॥तस्मादिसुसोःसामर्थ्येइत्येतद्विषयेव्युत्पत्तिपक्षएवाश्रयणीयः॥तथासतिप्रत्ययाप्रत्यययोःप्रत्ययस्यैवग्रहणमर्थवद्ग्रहणेनानर्थकस्यलक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्येतिपरिभाषाभिःसख्युःपाकइत्यादौनषत्वं॥परस्परसाहचर्येणकृतोरेवेसुसोर्ग्रहणात्॥पेचुःकाष्ठैरित्यादावपिनषत्वमित्येवयुक्तं॥व्युत्पत्तिपक्षमाश्रित्यशंकते॥नचेति॥इसुसंतांतस्येत्यर्थेनेति॥अनुत्तरपदस्थस्येत्यनेनपदस्येत्यस्यवैयधिकरण्येनान्वयकल्प

नात्परमसर्पिष्करोतीत्यादौ षत्वमित्यपि बोध्यं॥ नकर्तव्यमेवेति॥ अन्येतु अयामंताल्वाय्येल्वि ष्णुष्विति तितुत्रतथसिइति सूत्रद
यप्रणयनान्यथानुपपत्त्या पाणिनेर्व्युत्पत्तिपक्षोपि संमतः नित्यंसमासइति सूत्रे नित्यग्रहणाच्च॥ अव्युत्पत्तिपक्षेहि नित्यंसमासइत्य
स्यषत्वप्रतिषेधमात्रफलकत्वेन नित्यग्रहणवैयर्थ्यंस्पष्टमेव॥ किंचाव्युत्पत्तिपक्षस्यैवाश्रयणे जग्मुः पेचुरिति यस्यांक्रियायामि
त्याद्युक्तदोषापत्तेः॥ तदेतदभिप्रेत्य नित्यंसमासे इति सूत्रे भगवता भाष्यकृतोक्तं॥ अथचेत्कृदंतमेतदिति॥ अथचेत्सविज्ञानमि
त्यादिना पक्षांतरस्याप्यवलंबनंतु प्रौढिवादमात्रं तदेतदभिप्रेत्याव्युत्पत्तिपक्षेत्वाश्रीयमाणे सर्पिषेत्यादि न सिध्यतीति व्युत्पत्तिप
क्षएवेसुसंतस्याश्रयणीय इति नित्यंसमासे इति सूत्रे कैयटेनोक्तम्॥ आदिपदेन भिंद्युः पेचुरित्यादिपूर्वोक्तदोषसंग्रहः॥ किंचेसु
सोर्विषये व्युत्पत्तिपक्षाश्रयणे सर्पिःकालकमित्यादावसामर्थ्यादनेन षत्वाप्रवृत्ताविदुदुपधस्येति नित्यंषत्वापत्तिः एवंदेवदत्त
स्येदंसर्पिः फांटमिदंयज्ञदत्तस्येत्यत्रेदुदुपधस्येति षत्वापत्तिः॥ कस्कादिषु सर्पिष्कुंडिकाशब्दपाठस्तु व्यपेक्षायां तदभावे समा
सेचनित्यार्थः॥ असमासे व्यपेक्षाविरहे चेदुदुपधस्येति षत्वासिद्धेरित्याहुः॥ व्यपेक्षायां विकल्पएवेति बोध्यमिति॥ इदमयुक्तं॥ वि
कल्पेनमुक्ते कस्कादित्वान्नित्यषत्वप्रवृत्तेः सुलभत्वात्॥ किंचाव्युत्पत्ति पक्षस्यैवस्वेनाश्रयणेनाव्यपेक्षायामिदुदुपधस्येत्यनेनै

वषत्वमित्यस्या व्यपेक्षायांपाठसामर्थ्यनैवनित्यषत्वसिद्धिः॥ननुपरमसर्पिःकुंडिकेत्यत्रकस्कादित्वात्षत्वंदुर्वारं॥न चानुत्तरपदस्थ
स्येतिप्रसज्यप्रतिषेधाश्रयणेनकस्कादिषुचेतिविहितस्यापिषत्वस्यनिषेधइतिवाच्यं॥निषेधदृष्ट्यातस्यासिद्धत्वेनतन्निषेधासं
भवात्॥इतिचेन्न॥प्रकरणेप्रकरणमसिद्धमितितपक्षाश्रयणेनप्रसज्यप्रतिषेधाश्रयणसामर्थ्येनवाषत्वमात्रस्यनिषेधांगीकारात्
अत्रचानुत्तरपदस्थस्येतिकिं॥परमसर्पिःकुंडिकेतिभाष्यमानं॥नचैवंपरमसर्पिष्कल्पमित्यत्रेणःषइत्यस्यापिनिषेधापत्तिः॥कव
र्गपवर्गघटितएवसमासेऽनुत्तरपदस्थस्येतिनिषेधप्रवृत्तेः॥नचपरमसर्पिष्कल्पपुत्रमित्यत्रनिषेधापत्तिः॥प्रत्यासत्त्याकवर्गाद्युत्त
रपदकसमासएवोक्तनिषेधप्रवृत्तेः॥ ॥इतिविसर्गसंधिः॥कृतेत्वस्मिन्निति॥सूत्रेइत्यर्थः॥सुप्‌विभक्त्योर्ग्रहणमिति॥सप्तसुविभ
क्तिषुयेप्रथमेविभक्तीइत्यर्थः॥गुणवृद्धिहंतुरिति॥यद्यपिवृद्धिग्रहणंनप्रकृताभिप्रायेणप्रकृतेगुणस्यैवप्राप्तेः॥नापिपूर्वसवर्णदीर्घ
बाध्यकार्यसामान्यप्रदर्शनाभिप्रायेण॥यणपररूपयोरनुक्तेः॥तथापिनादिचीत्येतद्विषयेभ्रष्टावसरन्यायाप्रवृत्त्युपपादनायतद्विष
येप्रवर्त्तमानपूर्वसवर्णदीर्घबाध्यकार्यसामान्यप्रदर्शनमितिनकश्चिद्दोषः॥कस्यचित्संज्ञेति॥इदंहूयमानार्थकनाम्नएवप्लुतइति
भ्रमेण॥वस्तुतस्तुनाम्नएवग्रहणेप्रमाणाभावात्॥तच्चरूढंलौकिकंवेतिदूरात्धूतेचेतिसूत्रस्यस्वग्रंथाद्योगिकेपिप्लुतःप्रवर्त्तते॥आ

श्रयणसामर्थ्यादिति॥ ननुत्रिपाद्यांरोः सुपीत्यस्यानंतरंअतउरतिइत्येवपाठ्यमितिचेन्न॥ उत्वस्यासित्धत्वेनगुणानापत्तेः॥ मनोर
यइत्यत्रोत्वस्यासित्धत्वेनरोरीतिलोपापत्तेश्च॥ यद्यप्यप्लुतादितिविशेषणसामर्थ्येनप्लुतस्यसित्धत्वेऽप्लुतइतिव्यर्थं तथापितत्सा
मर्थ्येनदूरात्धूतेचेत्यस्यसित्धत्वेपिगुरोरनृतइत्यस्यसित्धत्वेमानाभावइत्याशयेनाप्लुतइत्युक्तंसूत्रकृता॥ प्लुतस्याश्रयणसामर्थ्येन
पूर्वत्रासित्धमित्यसित्धत्वंबाध्यतेनत्वसित्धंबहिरंगमंतरंगइतीत्यभिप्रेत्याह॥ पयसीति॥ अन्यथाश्रयणसामर्थ्येनास्यासित्धत्व
मात्रबाधने॥ नन्वंतरंगस्यासित्धत्वइवपरिभाषादृष्ट्याबहिरंगस्यासित्धत्वेपिपरिभाषानप्रवर्ततइत्याशंक्याह परिभाषादृष्ट्येति॥
स्वदृष्ट्याऽसित्धस्यपरंप्रत्यसित्धत्वप्रतिपादनसंभवंलोकदृष्टांतेनोपपादयति॥ स्वदृष्ट्येति॥ स्वदृष्ट्याविद्यमानस्यघटादेः परंप्रत्य
विद्यमानत्वप्रतिपादनदर्शनादित्यर्थः॥ प्रतिपाद्याभावइति॥ प्रतिपत्तिक्रियायाः सकर्मकत्वेनप्रतिपाद्यरूपकर्मणोऽभावेयथानिष्प
त्तिर्भोज्याभावेभोजनस्येव॥ तथांतरंगंप्रत्यसित्धत्वप्रतिपादिकापरिभाषांऽतरंगादर्शनेकंप्रत्यसित्धत्वंप्रतिपादयेत्॥ उत्वंप्रतीवत
द्दृशास्यपरिभाषांप्रत्यपिप्लुतसित्धत्वमित्यन्ये॥ पूर्वत्रासित्धमित्यसित्धत्वस्येवाश्रयणसामर्थ्याद्बहिरंगासित्धत्वस्यापिकुतोनवा
धइत्याशंक्याह॥ आश्रयेणेत्विति॥ प्रत्यक्षत्वेनचेति॥ पाणिनिनासाक्षादुच्चारितत्वेनेत्यर्थः॥ तथाचप्रत्यक्षस्यप्रथमोपस्थितस्यबाधे

नोपपत्तावानुमानिकस्य विलंबोपस्थितिकस्य बाधकल्पनानयुक्तेति भावः॥ स्पष्टं भाष्य इति॥ अतोरोरप्लुतादिति सूत्रे इत्यर्थः॥ ननुप्लु
तप्रगृह्या इति सूत्रे प्लुतस्यासिद्धत्वज्ञापनद्वारा एकादेशाप्लुते विप्रतिषेधेन कृते प्रकृतिभावः॥ देवदत्त ३ अत्र त्वमसीति भाष्यस्योक्तं घटेन
प्लुतस्यैकपदाश्रयत्वादंतरंगत्वं नैकादेशस्य तु पदद्वयापेक्षत्वेन बहिरंगत्वेन चिंत्यतोक्तौ प्लुतस्यापि वाक्यत्वसंपादकपदांतरसापेक्ष
त्वादेकादेशस्य समत्वाच्चिंत्यमेव चिंत्यमिति विवरणोक्तिर्विरुध्यते॥ वाक्यस्य टेः प्लुतार्थं देवदत्ता इत्यस्यादावेहीति शेषपूरणस्याव
श्यकत्वात्॥ वाक्यद्वयसापेक्षैकादेशस्यैवमपि बहिरंगत्वादिति चेत्सत्यं॥ भाष्यकारेण तु परत्वेनांतरंगत्वेन वा पूर्वं प्लुतप्रवृत्तौ विशे
षाभावादंतरंगत्वं स्थितमप्युपेक्ष्य विप्रतिषेध उपन्यस्तः॥ नदीप इति॥ आदेः परस्येत्यादेः स्यादिति भावः॥ भोभगो इति॥ दीर्घ इति॥ त
त्राचश्चेति परिभाषा नोपतिष्ठते॥ फलाभावादिति भावः॥ तथा च स्थानषष्ठ्यंतपदजन्यप्राथमिकोपस्थितिविषय इडिति समुदाय
एवेति न तत्र स्थानिवन्निषेधः॥ हे रामेति॥ इदमुपलक्षणं॥ राम इत्यत्रापि पदत्वासिद्धेः॥ सुप्त्वस्य विसर्गस्य स्थान्यलवृत्तित्वात्॥ आनु
मानिकेति॥ राम इत्यत्रापि रेफांतस्य स्थाने विसर्गांत आदेश इति भावः॥ नन्वेवं स्थानिवद्भावेन सुबंतत्वलाभ इत्ययुक्तं॥ नियमशा
स्त्राणां विधिमुखेन प्रवृत्तेस्त्वपैवाभ्यर्णमुक्तत्वेन प्रत्ययलक्षणेनैव सुबंतत्वस्य वक्तुमुचितत्वादिति तटस्थशंकां परिहरति॥ प्रत्य

यलक्षणेनापीति॥अपिरक्तशब्दार्थे॥एवंचराजपुरुषइत्यादावपिस्थानिवत्त्वेनैवराजेत्यस्यपदत्वमित्याशयः॥यद्वावार्तिकमतेप्र
त्ययलक्षणसूत्रस्यविध्यर्थत्वेनवर्णाश्रयइत्यस्यवर्णमात्रवृत्तिधर्माश्रयएवप्रवृत्यातन्मतेप्रत्ययलक्षणसूत्रेणसिद्धिमाशंक्यनिरा
करोति॥प्रत्ययलक्षणेनापीति॥व्याख्यापूर्ववत्॥वार्तिकमतेलक्षणपदस्यवैयर्थ्यात्॥इदमापाततः॥तन्निमित्तकार्यस्येति॥प्रकृ
तिसंबंधिनइतिशेषः॥अतएवनखनिर्भिन्नइत्यादावैस्न॥तयाचपदसंज्ञायाः प्रकृतिप्रत्ययोभयसंबंधित्वेनप्रत्ययलक्षणसाध्य
त्वमित्यर्थः॥ प्रत्ययस्यकार्यकोटौप्रवेशेनपदसंज्ञानिमित्तत्वाभावात्॥उक्तरीत्येति॥आनुमानिकस्यान्यादेशाभावाश्रयणेनेत्यर्थः
तथाचदीर्घाह्नन्स्इत्यस्यांदशायांयथासुपीतिरत्वनिषेधस्तथादेशेप्यानुमानिकस्यान्यादेशाभावस्यसमुदायविश्रांततयाऽल्न
स्थानीतिनानल्विधावितिनिषेधः प्रवर्ततइतिभावः॥यद्यपिराजेत्यादौसुलोपेदीर्घोनस्यादित्यपिशंकितव्यंतथापिपरत्वाद्दीर्घ
स्यलोपात्पूर्वंप्रवृत्तिरितिसमाधानसंभवेनानुमानिकस्यान्यादेशाभावाश्रयणेनसमाधानक्लेशस्यनोपयोगः॥दीर्घाह्नोनिदाघइत्यत्र
तुरुत्वस्यासिद्धत्वात्पूर्वंलोपइतिआनुमानिकस्यान्यादेशाभावाश्रयणक्लेशआवश्यकइतिविशेषः॥नचैवंचित्रायांजातश्चित्रइत्यादौ
ङीप्प्रसंगः॥आनुमानिकस्यान्यादेशाभावेआश्रीयमाणेऽलःस्थानिवत्त्वाभावात्॥यदिचस्थान्यवयवाल्वृत्तिधर्माश्रयकत्वेनान

ल्विधावितिनिषेधइत्युच्यतेतदासप्रकृतेपिसमानइतिवाच्यं॥स्थान्यल्वृत्तीत्येतदंशेमात्रपदानिवेशेपिस्थान्यवयवाल्वृत्तीत्येतदंशे
तन्निवेशेनादोषात्॥अन्येतुस्थानिवदादेशइत्यत्रस्थानिपदंनिवर्त्यपरमेवलोकतएतत्सिद्धंतद्यथा॥लोकेयोयस्यप्रसंगेभवति
लभतेसोतत्कार्याणीतिस्थानिवत्सूत्रस्यभाष्यस्वारस्येनप्रसंगिनएवस्थानिपदार्थत्वलाभात्॥स्थानमस्यास्तीतिस्थानीतिव्युत्पत्तेश्च
उत्तरसूत्रानुरोधाच्च॥तत्रहिणिलोपस्यस्थानिवद्भावापस्थानिपदंनिवर्त्यपरमेव॥अग्रहीत्विशिष्टंह्येषोनलमाश्रयतेइटंनामेति
स्थानिवत्सूत्रस्यभाष्येएवइत्यनेनलोपःपरामृश्यते॥भोभगोइतिसूत्रस्थंभाष्यंतदनुसारीस्थानिवत्सूत्रस्थःग्रहोलिटिदीर्घइत्यत्रेटए
वस्थानित्वंनाचइतिकैयटग्रंथश्चप्रौढिवादेनैवप्रावृतत्॥उक्तभाष्यादिविरोधात्॥बहुलस्यासिद्धेश्च॥तथाहिवारिणीइत्यत्रद्विवच
नत्वस्यस्थान्यल् वृत्तित्वेनातिदेशेनादेशेतदलाभे॥प्रग्र ह्यत्वानापत्तिः॥इकारग्रहणंतुहरीइत्यादौचरितार्थं॥अंतादिवत्सूत्रस्था
ल्मात्रवृत्तिधर्माश्रयकेविधावप्रवृत्तावप्यल्वृत्तिधर्माश्रयकेविधौप्रवृत्तेः॥किंचैवंसतिईणमित्यत्रदीर्घः॥वीगतीत्यत्रप्रश्लिष्ट
स्यगुणेउपेतीत्यत्रैङिपररूपमितिपररूपं॥आदीध्येइत्यत्रएरनेकाचइतियण्॥उवेइत्युत्तमपुरुषेउवङादेशश्चनस्यात्॥धातु
त्वप्रत्ययत्वादीनांस्थान्यल्वृत्तित्वात्॥किंचराजेत्यादौनित्यत्वात्थलङ्ग्यादिलोपेदीर्घानापत्तिः॥एवंदीर्घाहोनिदाघेत्यत्रहल्ङ्या

दिलोपे रत्वापत्तिः॥ नचानुमानिकस्यान्यादेशभावाश्रयणेनासुपीति निषेधः॥ अन्होयमान्ह इत्यादौ रत्ववारणाय पदस्येत्यनुवृत्त्या
नशब्दांतस्य पदस्य रत्वमित्यर्थावश्यकत्वेन दीर्घाहन्सु इत्यस्यां दशायां रत्वस्याप्रसक्त्या तन्निषेधस्याप्यप्रवृत्त्यास्यानिवद्भावेन हल्
ङ्यादिलोपे जाते निषेधस्यातिदेष्टुमशक्यत्वात्॥ सावपि पदं भवतीति पक्षेपि रत्वनिषेधयोः त्रैपादिकत्वेन लोपात्पूर्वमप्रवृत्तेः॥ किं
चानुमानिकस्यान्यादेशभावांगीकारेपि श्रौतस्यान्यादेशभावस्य त्यागाभावेन श्रौतस्यान्यूल्वृत्तिसुप्त्वप्रयोज्यसुबंतत्वरत्वनि
षेधयोरल्विधित्वेन हे राम हे दीर्घाहो निदाघेत्यादावनापत्तिः॥ तदेतदभिप्रेत्योच्चारणकालेपः श्रुतः सस्यानित्वेनाश्रीयते न तु प्रति
पत्तिकाल इति मन्यते इति कैयटेनोक्तं भोभगो इति सूत्रे प्रत्ययलक्षणेनापीत्युक्तमप्ययुक्तं पंचसप्तराजपुरुष इत्यादौ प्रत्यय
लक्षणेन पदत्वमित्यस्य प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्य भाष्ये ग्रंथसंदर्भलब्धस्यानुपपत्तेः॥ उक्तभाष्यप्रामाण्येनास्मन्मते
लक्षणपदेन हि प्रत्ययस्यानिकमैसादिकमेव वार्यते न तु पदत्वादिकमपि तथा सति न खनिर्भिन्न इत्यादौ वैसादेरिव पंचेत्यादौ प
दत्वस्याप्यनापत्तिः॥ प्रत्ययलोपे प्रत्ययनिमित्तकमेव कार्यं भवति न तु तदुद्देश्यकमिति भवन्मते नियमपर्यवसानादित्याहुः॥ ननु
वर्तिपदार्थस्य तरबर्थप्रकर्षेणान्यपदार्थेन च युगपदन्वये परत्वात्सरपि ततो बहुव्रीहौ लघुतरप्रयत्न इति स्यादत आह॥ अन्यपदार्थ

वि॰
५९

संबंधोत्तरमिति॥ तथाचवार्तिकं॥ पूर्वपदार्थातिशये आतिशायिके कृते बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थ इति पूर्वविप्रतिषेधेनेतित
द्भावप्रदर्शनं कैयटेन कृतं॥ पूर्वविप्रतिषेधे प्रमाणं तु लघुप्रयत्नतर इति निर्देश एव एतन्मते तु अन्यपदार्थसंबंधोत्तरमेव वृत्तिप्र
दार्थातिशयविवक्षाभिधानस्वाभाव्यात्॥ तेन सूक्ष्मवस्त्रतरादिसिद्धिः॥ अत्रापि प्रमाणं लघुप्रयत्नतर इति निर्देशः॥ अत्र कैयटोक्त
मेव युक्तं॥ वृत्तपदार्थे विशेषणान्वयकल्पनाभावात्॥ वर्त्तिपदार्थप्रकर्षविवक्षयेति॥ शक्यतावच्छेदकगतस्यैव शक्यतावच्छेदक
तावच्छेदकगतस्यापि प्रकर्षस्य तरबर्थत्वादिति भावः॥ ॥ओतोगा॥ ॥साहचर्यादिति॥ ॥यद्यपि स्मृतावच्युतेत्यत्र व्योरिति ल
घुप्रयत्नेवकारे कर्तव्ये स्थानिवद्भावान्नवकारः पदांतः॥ पूर्वत्रासिद्धत्वेन स्थानिवदित्यस्य पदचरमावयवातिरिक्तविषयकत्वस्यो
क्तत्वात्॥ तथाच साहचर्याश्रयणस्य स्मृतावच्युतेत्यत्र नोपयोगः॥ तथापि जनानवतीति जनौस्तस्यापत्यं जनावपत्यमित्यादौ धा
त्ववयववकारस्य ग्रहणवारणाय यकारसाहचर्यस्यावश्याश्रयणीयत्वमित्यभिप्रायेणेदं॥ वस्तुतो ऽयुक्तमेतत्॥ स्मृतौवेत्यत्रेव
एते विंचिरोऽनयनमवनयनमित्यत्र धात्ववयवयकारस्यासंभवात्॥ एवं नयतेर्विजंतस्यानयनशब्देन समासे धात्ववयववकार
संभवो बोध्यः॥ स्मृतावच्युतेति॥ स्मृतां वेतीति स्मृतौ वीस्तमाचष्टे इत्यर्थे णिजंतादि्विचि रूपं॥ स्थानिवद्भावस्तु न॥ लोपस्य पदचरमा

नवयवत्वेनपूर्वत्रासित्येनेत्यस्यप्रवृत्तेरितिभावः॥वस्तुतईदृशानामभिधानेदृढंमूलंनपश्यामः॥गार्ग्यश्रुतेरिति॥शाकटायनम
तेएवंलघुप्रयत्नयोर्विधानात्गार्ग्यमतेतदभावात्॥इत्याद्यनुवृत्तेरिति॥लोपःशाकेत्यत्र नचशाकल्यभिन्नमतेलोपोनेतिस्मृत्यं
तरानुसंधानेगार्ग्यमतेलोपाभावापत्त्यागार्ग्यःस्वस्मान्मतात्प्रच्युतःस्यादितिवाच्यं॥शाकल्यभिन्नोयोगार्ग्यभिन्नस्तन्मतेलोपोने
तिस्मृत्यंतरानुसंधानकल्पनोपपत्तेरित्याशयात्॥तदनुवृत्तिरिति॥भोइत्याद्यनुवृत्तिरित्यर्थः॥हलिसर्वेषां॥अपूर्वाल्लघुप्रय
त्नइति॥शाकटायनमतेएवलघुप्रयत्नविधानेनशाकल्यमतेतदभावादितिभावः।प्रकरणेप्रकरणमस्तित्वंनयोगेयोगइतिपक्षेतुनायं
दोषः॥तद्बाधादिति॥वस्तुतस्तुलोपःशाकेत्यस्याभावेहलिसर्वेषामित्यस्यप्रवृत्त्यादोषाभावात्॥अयंप्रयासोव्यर्थएव॥फलाभा
वाच्चेति॥वृक्षवृकरोतीत्यादावशीत्यनुवृत्त्याऽस्याप्रवृत्तिः॥वृक्षवृहसतीत्यादेस्त्वनभिधानं॥द्वयोरपिवानभिधानमितिभावः।नि
र्दृंशोरिति॥सुपिचेत्यत्रतदंतविधौदीर्घानापत्तेरितिभावः॥निष्ठेत्यादाविति॥रदाभ्यांपरस्यनिष्ठातस्ययस्तकारइत्यर्थेदृषतीर्णे
त्यादौधातुतकारस्यततःपूर्वदकारस्यचनत्वापत्तिरितिभावः॥वर्त्तिपदार्थस्यवृत्त्यघटकविशेष्यान्वयायोगान्नतदंतविधिरि
तिकेचित्॥सप्तमीस्थइत्यादावविवेतदंतविधिप्राप्तेरित्यन्ये॥नलुमतेतिनिषेधादिति॥तत्रांगपदंपूर्वोपलक्षणं॥रेफविधान

कि॰ ५॰

सामर्थ्यात्त्रिपाद्यामपिप्रवृत्तिरितिभावः॥ननुअहन्सुपिरइतीत्येवन्यासोस्तुलाघवादितिचेन्नगुरुन्यासेनक्वचिदसुप्यपिरुत्व
कल्पनात्॥तदेतत्यठ्यते॥रूपरात्रिरथंतरेष्विति॥अकारांतेपरत्वादतोलोपस्येकारोकारांतेचगुणस्यप्रवृत्यानदोषः॥चचार्थ्रा
दीचेति॥नन्वंतरंगत्वाद्दीर्घेऽभ्यासह्रस्वत्वेनसिद्धमितिचेन्न॥ऊखतुरित्यादावपिसवर्णदीर्घेह्रस्वापत्तेः॥यदिचतत्रवार्णादांग
मितिपूर्वंह्रस्वस्ततोदीर्घस्तर्हिप्रकृतेपिसमः समाधिः॥विप्रतिषेधेपरंकार्यम्॥आवश्यकतयेति॥अक्लृप्ताभावकस्याभावक
ल्पनायोगादितिभावः॥तद्भिन्नोस्यविषयइति॥ननुनित्यांतरंगादीनांज्ञापकन्यायाभ्यांबाधकत्वंपरस्यतुविप्रतिषेधेपरमिति
प्रत्यक्षवचनकृतंतत दितिप्रत्यक्षवचनस्यज्ञापकन्यायादितः प्राबल्यादिदमयुक्तमितिचेत्सत्यं॥तुल्यबलविरोधस्यविप्रतिषेध
शब्दार्थत्वांगीकारेणादोषात्॥तदेतदभिप्रेत्यात्रसूत्रेभगवताभाष्यकृतोक्तं॥द्वौप्रसंगौयदान्यार्थौभवतएकस्मिंश्चयुगपत्प्राप्नु
तःसविप्रतिषेधइति॥तत्रान्यार्थावित्यनेनापवादव्यावृत्तिः॥युगपत्प्राप्नुतइत्यनेनांतरंगव्यावृत्तिः॥तद्धिपरस्मात्पूर्वमेवप्राप्नुते
नतेनयुगपत्॥इदंनित्यव्यावर्तकस्योपलक्षणंविशेषणं॥कैयटस्तुअत्रसूत्रेकार्यमित्यर्हार्थेकृत्यः करणार्हकार्यंतुल्यबलंचकर
णार्हमितिनित्यानित्योत्सर्गापवादांतरंगबहिरंगेषुअस्यसूत्रस्याव्यापारइत्याहुः॥स्वस्वनिमित्तानंतर्यासंभवइति॥निमित्तंविधेय

विशेषमितिभावः॥सकृद्गताविति॥यद्बाधितमित्यनेनान्वेति॥गतौयुगपत्प्रत्याप्तौपुनःप्रसंगविज्ञान बीजमाह॥यदेत्यादिना॥लक्ष्य
प्रेष्ययोरिति वस्तुतस्तुभृत्यसदृशंलक्ष्यंप्रेषणक्रियासदृशीसंस्कारक्रियापर्यायेणकार्यकरणस्थानापन्नंचशास्त्रविहितकार्यस्वी
कारः तथाचयथातुल्यबलयोरेकौयुगपत्प्रेषितौभृत्यौपूर्वनानादिग्‌धिकरणकत्वेनयुगपदसंभविकार्यद्वयंनकरोतितथातुल्य
बलयोःशास्त्रयोःसंस्कार्यंलक्ष्यंयुगपदसंभवितद्विहितंकार्यद्वयंनभजतीत्यर्थः॥सतयोःपर्यायेणकार्यंकरोतिइत्यंतोभाष्यग्रं
थस्तुविभिन्नकालिकाविरोधिकार्यद्वयंतुलक्ष्यंभजत्येवेतिप्रसंगाद्वक्तुंतत्रदृष्टांतप्रदर्शनपरंयुगपदसंभवस्यतत्राभावेनदृष्टां
तासंगतेः॥इहभवताद्वौहेतूव्यपदिष्टौतृजादिभि स्तुल्यंपर्यायःप्राप्नोतीतिअप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्॥ ॥ ॥ ॥
॥ ॥ ॥ ॥ ॥तंद्ययाद्वयोस्तुल्यबलयोरेकःप्रेष्योभवतिसतयोःपर्यायेणकार्यंकरोति॥यदातमुभौयुगपत्प्रेषयतइत्य ग्रिमभा
ष्यग्रंथासंगतेश्च॥पुनर्धिर्भवतीति॥इदमयुक्तं॥स्थानिवत्सूत्रस्थभाष्यविरोधात्॥तत्रहिभिंत्तादित्यत्रपरत्वात्तातङि·धिभावमाशं
क्यसकृद्गतिन्यायेनसमाहितं॥किंचैवंभिंत्तादितिरूपस्यविलयापत्तिः॥अत्रकश्चिद्विकल्पशास्त्राणामभावेपितात्पर्यंस्वीकृत्ये
तातङि·पुनर्धिर्भवतीत्यस्यतातङ·भावेपुनर्धिर्भवतीत्यर्थमुक्त्वाऽत्रतातङ्·धिभावयोरित्याद्यग्रिमग्रंथस्तुविकल्पघटकता

शे॰ ७ तङ्·विधिनाधिभावस्यविरोधोपपादनायेत्याह॥ तत्तुक्तम्॥विकल्पशास्त्राणामभावेतात्पर्यंहि यस्येतिसंघातग्रहणंचेत्क्व
स्यविभाषायांदोषोभवतियदालोपस्तदासर्वस्यलोपः यदाऽलोपस्तदासर्वस्यालोपः इतियस्यहलइतिसूत्रस्यभाष्यानुरोधा
त्कल्प्यं॥तच्च भाष्यंसूत्रांतरस्थानेकभाष्यविरोधादेकदेश्युक्तिरितियस्यहलइतिसूत्रेविवरणेनव्यैरुक्तं॥तथाचतत्रयथाव
दन्शून्यहृदयद्रवतद्विरुत्थंकथमत्रवदेत्॥पुनःप्रसंगोदाहरणंत्वीजतुरिति॥तत्रहिपरत्वात्संप्रसारणं॥यत्त्वेतदुदाह
रणंरवट्वायामिति॥अत्रहिपरत्वादामिकृतेपुनःप्रसंगविज्ञानाद्याडितिपाठकेनोक्तंतत्तुक्तं॥निरवकाशत्वेनैवाम्प्रवृत्तेः
निरवकाशत्वेनबाधेपश्चादुत्सर्गप्रवृत्तेर्याडितिनकश्चिद्दोषः॥स्पष्टंचेदंनव्यग्रंथेषु॥ननुकार्यकालपक्षेतस्मिन्नितिपरि
भाषयाङ·मोह्रस्वादचीत्यत्रतत्संस्कारार्थमुपस्थितायानिरवकाशत्वेनकथंतस्मादित्युत्तरस्येत्येतद्बाध्यत्वं॥नहितत्रोपस्थि
तयाविध्यंतरंसंक्रियतेयेनसावकाशत्वंस्यादित्याशंक्याह त्रिपादीस्थेनेति॥तथाचतस्याबाधोनामविधिशास्त्रेणानाकर्षण
मेवेतिभावः॥प्रदेशएवेति॥विधिदेशएवेत्यर्थः॥अत्रप्रमाणंतुसंज्ञाशास्त्रानुसंधानंविनाविधिवाक्यार्थबोधानिष्पत्तिः॥अया
दिभ्यःपरैवप्रगृह्यसंज्ञेतिभाष्यंच॥यद्यपीयंपरिभाषेति॥नकार्यमितिशेषः॥एवंचेति॥प्रतिद्वंद्विभावापन्नकार्यद्वयनिमि

त्तकत्वेचेत्यर्थः॥ यथोद्देशेवेति॥ परोक्षाक्रियेत्यादिवदर्थआद्यजंनमेतत्॥नन्वसतिङमोह्रस्वादचीत्यत्रैतत्प्रवृत्त्यनापत्तिः
तथाचोभयनिर्देशेपंचमीनिर्देशोबलवानितिभाष्यासंगतिरितिचेन्न॥त्रिपादीस्थेनतयोराकर्षणेपिउक्तरीत्यात्रिपादीस्थत्वाभा
वेनविप्रतिषेधशास्त्रदृष्ट्यातयोरसिद्धत्वस्यपूर्वत्रासिद्धमित्यनेनबाधनासंभवेनतयोर्विषयेविप्रतिषेधेत्यस्यप्रवृत्तेर्निर्बाध
त्वादित्याशयात्॥इतिलोपेप्राप्तइतिनिर्मूलं॥पूर्वत्रासिद्धमित्यस्यापर्यालोचनदशायांबोध्यं॥एतत्तदोः॥प्रकृतिवदनुकर
णमित्यतिदेशेनैकशेषमाशंक्याह॥अनुकार्येति॥ ॐ ॥इतिस्वादिसंधिः॥ ॐ ॥अर्थवदधातुरप्रत्ययःप्रातिपदिकम्॥अर्थ
वदधातुरतिप्प्रातिपदिकमित्येवसूत्रंकार्यम्तिविभत्यारभ्यसुपःपकारेणप्रत्याहारः॥तद्धितग्रहणंचोत्तरत्रनकार्यं॥यदाऽर्थ
वदविभक्तिरधातुप्रातिपदिकमित्यस्त्वितितन्न॥आद्येप्रत्यासत्तिन्यायाश्रयणेसिपःपकारेणप्रत्याहारापत्तेः॥व्याप्तिन्यायाश्र
यणेतुकपःपकारेणतदापत्तेः॥द्वितीयेतुतत्रेत्यादेविभक्त्यंतत्वेनप्रातिपदिकत्वानापत्त्यातद्धितग्रहणस्यावश्यकतयान
लाघवं॥आवर्तितेइति॥स्वमतेप्रत्ययपर्युदासाभावात्प्राचांमतेनेदंप्रत्ययस्ययत्रसंज्ञेति॥धर्मिग्राहकमानबलादितिभावः॥अ
न्येतुकृदतिङ्षःप्रत्ययस्यतद्धितस्यासर्वविभक्तिरित्यादावपिनिषेधप्रवृत्तेरिष्टत्वेनायुक्तमेतत्॥अन्यथाव्यतिसदित्यादावेव

कि० ५२

निषेधः प्रवर्तेत ॥ षडित्यादावेव चेत्संज्ञाप्रवर्तेत ॥ तस्मात्तत्स्थितौ तस्य प्रातिपदिकसंज्ञाविधानेनात्रतदंतविधिः कल्प्यतइत्याहुः ॥ मूलोक्तं प्रत्ययपर्युदासं प्रत्याख्यातुमाह ॥ अत्रेत्यादिना ॥ एतत्संज्ञाफलभूतेति ॥ इदं वस्तुस्थितिकथनं न तु अर्थवत्त्वशरीरघटकं फलाभावात् ॥ अत एव शब्दरत्नेएतत्संज्ञाफलभूतेति न दृश्यतइति केचित् ॥ वस्तुतस्तु ओदनंपचतीत्यादावोदनंपचेति समुदायस्यार्थवत्त्वेन प्रातिपदिकत्ववारणायैतत्संज्ञेति ॥ तत्समुदायस्य तिङ्रूपविभक्त्यपेक्षयार्थबोधजनकत्वेपि तदितरानपेक्षयार्थबोधजनकत्वात्प्रातिपदिकं प्राप्तं ॥ एतत्संज्ञेत्युक्तौ तु एतत्संज्ञाफलभूतविभक्तीतरतिङपेक्षयैवार्थबोधजनकत्वात्तद्वारणं पंचेत्यस्य स्वातंत्र्येण प्रयोगार्हत्वाभात् ॥ एतेनैतत्संज्ञाफलभूतेति व्यर्थमेव शब्दरत्नेदर्शनादिति पाठकोक्तमपास्तम् ॥ शब्दप्रयोजनानुरोधेन तस्य पूरणीयत्वात् ॥ एवं च देवदत्तस्य पुत्र इत्यत्र स्यपुत्र इति समुदाये षष्ठ्यर्थस्य पुत्रपदार्थेन्वयेनार्थवत्त्वेपि न प्रातिपदिकत्वं विभक्तीतरषष्ठीप्रकृत्यपेक्षयैव लोकेर्थबोधजनकत्वेन परिष्कृतार्थवत्त्वाभावात् ॥ समासग्रहणकृतनियमेन तु नास्य वारणं षष्ठ्याः स्वातंत्र्येण प्रयोगानर्हत्वात् ॥ अत्र वदंति ॥ एवंविधार्थवत्त्वग्रहणेखट्वशब्दस्य प्रातिपदिकत्वानापत्तिः ॥ विभक्तीतरटावपेक्षयैवाखट्वशब्दस्यार्थबोधकत्वात् ॥ टाविधानं त्वनियतलिं

गेचरितार्थं॥विभक्तीतरवाचकविवक्षणेपिएधांचकारेत्यादावेधामित्यस्यप्रातिपदिकत्वानापत्तिः॥चकारेत्येतदपेक्षयैवलो
केतस्यार्थबोधकत्वात्॥यदिविभक्तीतरोवाचकःप्रत्ययोविवक्ष्यतेतदापंचनावप्रियेत्यादौपंचनावेत्यस्यप्रातिपदिकत्वाप
त्तिःप्रियशब्दापेक्षयातस्यार्थबोधकत्वेपिप्रियशब्दस्याप्रत्ययत्वात्॥एवंप्रत्ययस्यापि॥यदिचविभक्तीतरत्यत्स्वगतवृत्त्या
श्रयइत्युच्यतेतदाहरिष्वित्यादौप्रत्ययस्यप्रातिपदिकत्वापत्तिः॥प्रकृत्यपेक्षयातस्यार्थबोधकत्वेपिप्रकृतेरताद्दशत्वात्॥
हारिद्रविणइत्यादौणिनंतस्यप्रातिपदिकत्वानापत्तिश्च॥तस्यस्वगतवृत्त्याश्रयाध्येत्रणपेक्षयैवार्थबोधकत्वात्॥यदिचविभ
क्तीतरत्यत्स्वसमवेतसंज्ञाश्रयीभूतंतद्विवक्ष्यते॥प्रियशब्दश्चस्वसमवेतसमाससंज्ञायश्रयः॥चकारेत्ययंतुनतथा॥हरि
ष्वित्यादौप्रकृतिभागस्तुतथाविधपदत्वाश्रयइतिप्रत्ययस्यतदपेक्षयाऽर्थबोधकत्वेनप्रातिपदिकत्वव्यावृत्तिः॥एवंचकुंभ
कारेत्यत्रकारेत्यस्यनप्रातिपदिकत्वमितिस्त्रीप्रत्ययप्रकरणस्थशेखरविरोधोपि॥स्वसमेवेतसमासत्वाश्रयकुंभेत्येतदपेक्षये
वार्थबोधकत्वात्तथाचद्रष्टुंयातिभुक्त्वाव्रजतीत्यादौतुभुनंतादीनांप्रातिपदिकत्वसिद्धिः॥स्वनिष्ठार्थबोधकत्वप्रयोजकत्वे
स्यपातीत्यादेःस्वनिष्ठसंज्ञानाश्रयत्वादित्युच्यते॥तदास्नात्वाकालकादावित्यादौस्नात्वेत्यादेःप्रातिपदिकत्वानापत्तिःतस्य

स्वगतसमासत्वानाश्रयकालाद्यपेक्षयैवार्थबोधकत्वात् एवं प्राच्छेदित्यादेः प्रातिपदिकत्वानापत्तिः॥स्वगतसमासत्वाश्रयकृत्त्वकाद्यपेक्षयैवार्थबोधकत्वात्॥ किंचोत्तरसूत्रेपिएवंविधार्थवत्त्वस्यैवविवक्षणीयतयाप्रागुक्तसर्वपक्षेष्वपितद्धितसमासयोः प्रातिपदिकत्वानापत्तिः॥अलौकिकेप्रक्रियावाक्येएवप्रातिपदिकत्वस्यवक्तव्य त यातस्यलोके सर्वथाऽर्थबोधकत्वादिति॥अत्रोच्यते॥अंतिमः पक्षएवसाधीयान्॥स्नात्वाकालकादौतुनदोषः॥समाससंज्ञार्थं स्नात्वादेः सुबंतत्वस्यावश्यकतयाततः पूर्वमेवप्रातिपदिकत्वप्रवृत्तेः॥तस्यां चदशायांकालकादेः स्वगतसंज्ञानाश्रयत्वात्॥ एवंमूलकेनोपदंशमित्यादावप्यदोषोबोध्यः॥मूलकेनेत्यादौसमाससंज्ञातः पूर्वंस्वगतसंज्ञानाश्रयत्वात्॥अलौकिकेप्रक्रियावाक्येतुस्वप्रकृतिकपरिनिष्ठितनिष्ठंईदृशार्थवत्त्वमारोप्यप्रातिपदिकत्वंनिर्वाह्यं यद्वाविभक्तीतरत् शास्त्रेयत्स्वप्रकृतिनिमित्ततयानाश्रीयतेतदेवप्रगृह्यते प्रत्ययस्यप्रकृतिस्तथाविधापंचगवेतिसमासस्यचधनेतितथाविधमुत्तरपदेविहितसमासमुपजीव्यटचः प्रवृत्तेस्तैनैधांखद्भुत्का हारिद्रविषणइत्यादौनषः॥चकारेतितिडं तस्यटापः व्रजतीतितिडंतस्याध्येत्रणश्चामंतादितिनिमित्ततयाशास्त्रेऽनाश्रयणात्॥कर्मण्यणित्यस्यकर्मोपपदसंज्ञकंभवतिधातोश्चाणितिवाक्यार्थेनिमित्तीभावस्यानाश्रयणेपित

त्रोपपदंसप्तमीस्थमित्येतदेकवाक्यतयाकुंभेत्यादेःकर्मणोऽण्निमित्ततयाऽश्रयणमस्त्येवतस्मिंश्चसत्येववक्ष्यमाणःप्रत्य
यइतितदर्थात्॥तेनकारेत्यस्यनप्रातिपदिकत्वमितिस्त्रीप्रत्ययस्यशेखरोपपत्तिः॥वस्तुतस्तुसन्नियोगशिष्टन्यायेनैवतस्मिं
श्चसत्येववक्ष्यमाणःप्रत्ययइत्यर्थलाभेतत्रेत्यस्यतदर्थकस्यानाश्रयणेनकुंभेत्यस्यशास्त्रेननिमित्तत्वेनाश्रयणमितिस्त्रीप्र
त्ययस्यशेखरोऽसंगतएव॥गतिकारकोपपदानामित्यत्रोपपदग्रहणंसार्थकंदधिसेचावित्यादौदधीत्याद्युपपदस्यसुबंतेनस
मासश्चोपपद्यते॥तेनमूलकोपदंशमित्यत्रोपदंशमित्यस्यप्रातिपदिकसिद्धिः॥प्रादीनामुपसर्गसंज्ञायांधातोर्निमित्तत्वेपिप्र
योगेऽनिमित्तत्वान्नदोषः॥तेप्राग्धातोरित्यत्रसंज्ञानियमपक्षाश्रयणात्॥नन्वेतत्संज्ञाफलभूतविभक्त्यपेक्षयालोकेऽर्थबोधज
नकत्वमित्येतावदेवास्तुकृतंनञ्द्वयप्रवेशेनेत्यतआह॥अहन्निति॥तथाचाधातुरित्यादिपर्युदाससार्थक्यायनञ्द्वयप्र वेश
इतिभावः॥नचनञ्द्वयप्रवेशोऽधातुरितिपर्युदासश्चमास्त्वितिवाच्यं॥दधिपश्यराजपुरुषइत्यादौदधिराजेत्यस्यप्रातिपदिक
त्वानापत्तेः॥नचेति॥नहीत्यर्थः॥यद्यप्यस्यापत्यमित्र्यतिसइत्यादौकेवलप्रत्ययस्याप्युक्तार्थबोधकत्वमस्तितथाप्यादौन
त्थितांतत्वेनप्रातिपदिकत्वभागेवांत्यंतुप्रत्ययांतपर्युदासेनापिव्यावर्त्यम्॥तथाचप्रातिपदिकत्वालक्ष्यप्रत्ययांतपर्युदास

विं
५४

व्यावर्त्यैदृशार्थबोधकंनकिंचित्प्रत्ययसंज्ञकमस्तीतितात्पर्यं॥ विशुत्थानां॥ प्रत्ययरहितानांकृत्तत्धितानामित्यादेः कृत्तस्धितानांके
वलानां॥प्रकृत्यसमभिव्याहृतानामर्थौलौकिकः॥ लोकेप्रतीयमानइत्यर्थः॥ प्राग्‌विभक्तेः॥ विभक्त्युत्पत्तेः प्राक्॥तदंतस्य॥कृत्त
त्धितांतस्य॥तथैवार्थो॥लौकिकोऽर्थः॥ नविघतइत्यत्रान्वयः॥एवंचकृतत्धितांतस्यविभक्त्यपेक्षयालोकेबोधजनकत्वेपिविभ
क्तीतरानपेक्षेत्याद्युक्तार्थवत्वंसुस्थमिति ध्वन्यते॥लौकिकार्थप्रत्यासन्नत्वंचकृत्तत्धितांतार्थस्यविभक्तीतरानपेक्षयाप्रतीय
मानत्वात्॥ विभक्त्यंतार्थोहिलौकिकः॥ सर्वथेतरनैरपेक्ष्येणलोकेप्रतीयमानत्वात्॥कृदंतार्थस्तुविभक्तिमात्रापेक्षयाप्रतीय
मानत्वात्तत्प्रत्यासन्नः॥कृत्तत्धितार्थस्तुस्वप्रकृतिविभक्त्युभयापेक्षयैवकृदादेः प्रतीयमानत्वाद्विप्रकृष्टइतिबोध्यं॥तत्ता मर्थ्या
दित्येवेति॥अधातुरितिपर्युदासेनपूर्वसूत्रेऽर्थवत्वलाभात्॥कृदादीनांचानर्थकानामप्रसित्धेरितिभावः॥सामान्यतोऽर्थवत्व
ग्रहणेइति॥उत्तरसूत्रेविशिष्टार्थवत्वस्ये वोपयोगेनार्थाधिकारानुरोधात्पूर्वसूत्रेपितादृशार्थवत्वग्रहणेन्यायतःप्राप्तेपितत्प
रित्यागेनसामान्यतोर्थवत्वग्रहणेइत्यर्थः॥सूत्रद्वयेउक्तार्थवत्वग्रहणेफलमाह॥अतएवेति॥अतएवे त्यारभ्यनाप्युत्तरसूत्रेणे
त्यंतमेकंवाक्यं॥प्रातिपदिकत्वेटाबापतिरितिवाक्यांतरं॥तत्प्रत्याख्यानेकृत्सूत्रस्थचनानेनप्रातिपदिकमित्यनेनैवान्वयः॥प्रस्य

यांतपर्युदासस्त्वेततएवपंचनावेत्यस्यप्रातिपदिकत्वंनेत्युक्तविधार्थवत्वस्यात्रसूत्रेग्रहणेनेदंसंभवतीतितत्प्रत्याख्यानेइत्यु
क्तं॥अतएवेत्यस्यसूत्रद्वयेउक्तविधार्थवत्वग्रहणादेवेत्यर्थः॥अस्मिन्सूत्रेईदृशार्थवत्वग्रहेपंचनावेतिप्रयोजनोपन्यासः॥उ
क्तविधार्थवत्प्रत्ययांतस्यचेत्प्रातिपदिकत्वंतर्हितथाविधतद्धितांतस्यैवेतिनियमाभिप्रायेणपंचनावेत्यस्योक्तविधप्रत्ययां
तत्वाभावेनोक्तनियमाप्रवृत्तावर्थवत्सूत्रप्राप्तिसंभवात्॥प्रत्ययांतसामान्यविषयेनियमेविज्ञायमानेत्वत्रसूत्रेईदृशार्थवत्वग्रह
णेनेदंप्रयोजनम्।प्रत्ययांतस्यचेत्प्रातिपदिकत्वंतर्ह्युक्तविधार्थवत्तद्धितांतस्यैवेतिनियमेनैतत्सूत्रविहितप्रातिपदिकत्वस्याप्र
वृत्तिसंभवात्॥बहुश्रेयसीप्रियतिसेत्यादौनदीत्वतिसाद्यर्थमुपसर्जनपदार्थेपिस्त्रीत्वभानस्यांगीकर्तव्यतयाटाबापादनोपप
त्तिः॥स्वार्थविशिष्टार्थांतरोपसंक्रांतत्वमुपसर्जनत्वंतच्चबहुकुरुचरेत्यादाविवपंचनावेत्यादावपीतिङीपोऽप्राप्त्याटाबापादि
तः॥ङीबापत्तिरितिपाठेतुयस्मान्ङीप्कर्तव्यस्तदर्थप्रतिटिदर्थाया विशेषणस्वरूपमनुपसर्जनत्वमुपपादनीयं भिद्दिदि
त्यादावधातुरितिपर्युदासेनप्रातिपदिकत्वाप्राप्तेःकृद्ग्रहणस्यतद्विधानार्थत्वेनियामकत्वासंभवात्तद्धितग्रहणस्यतदुक्तिः॥ य
त्वस्यापत्यमिरित्यादौप्रत्ययपर्युदासात्प्रातिपदिकत्वाप्राप्तौतद्धितग्रहणमपिविध्यर्थमेवननियमार्थं यदितुअङ्‌स्‌इत्यस्यांद

शायां प्रवृत्तं प्रातिपदिकत्वमेकदेशविकृतन्यायेन॥इरित्यत्रापि सुलभं॥प्रत्ययांतपर्युदासाभावे एव तद्धितग्रहणस्य नियमार्थत्व
प्रक्रमाच्च प्रत्ययांतपर्युदासाप्रवृत्तेरित्युच्यते तदा भिदृक्किवित्यस्यां दशायां प्रवृत्तं प्रातिपदिकत्वं भिदित्यत्रापि सुलभमिति नि-
तुच्छं॥प्रत्ययपर्युदासस्य मूलत एवाभावेन प्रत्ययांतपर्युदासस्य च व्यर्थत्वेन शंक्यमानत्वेन त्वदुपन्यस्तशंकाडंबरस्यापरास्तेर्बोधि
नुष्कस्य कंठाडंबरत्वात्॥किं चांतरंगत्वात् क्विपो लोपे ऽधातुरिति पर्युदासेन भिदित्यादौ प्रातिपदिकत्वं दुर्लभं॥अस्यापत्यमिरित्या
दौ प्रातिपदिकत्वं विना सुबलुगेव नेति महद्वैषम्यं॥टाप्यस्ते गोस्त्रियोरिति ह्रस्वस्तु न शंक्यः॥राजकुमारीपुत्र इत्यादाविव तद्वार
णासंभवात्॥न चैवं पंचनौ शब्दस्याप्रातिपदिकत्वेन टजेव दुर्लभ इति वाच्यं॥समासांतविधौ प्रातिपदिकाधिकाराभावस्य वक्ष्य
माणत्वात्॥न च सन्निपातपरिभाषया टापृङीपोर्वारणं॥द्विगुसंज्ञाद्वारोत्तरपदानंतर्यनिमित्तकस्य टचस्तद्विघातकत्वा
दिति वाच्यं॥कृन्मेजंत इति सूत्रस्य भाष्यप्रामाण्येन रंपरयापि तद्विघातकत्वस्य ग्रहणेपि सन्निपातलक्षणस्य साक्षादेव ग्रहणमित्या
शयात्॥अत्र ङीबापाद्यमानो द्विगोरिति वा टिड्ढेति वा विहितो बोध्यः॥इति दिगिति॥अन्ये त्वर्थवत्त्वमत्र शक्तिलक्षणाद्योतनान्यत
मसंबंधेनार्थोपस्थितिजनकत्वं॥गोपीत्यादौ ङीषुत्पत्तेः पूर्वमेव प्रातिपदिकस्य लक्षणावश्यकत्वेन गोपेत्यस्य प्रातिपदिकत्व

सित्यन्वयेलक्षणेति॥ द्योतकनिपातसंग्रहाय द्योतनेति॥ ननु विभक्तीतरसमभिव्याहारानपेक्षयेति परिष्कृतमर्थवत्वं।सित्वंत्व
न्वयव्यतिरेकाभ्यामित्यारभ्य वर्णितार्थवंतोऽन्वय व्यतिरेकाभ्यामित्यंतेनैतत्सूत्रस्य भाष्यग्रंथसंदर्भेणास्मदुक्तार्थव
त्त्वस्यैवार्थवच्छब्दार्थत्वावगतेः॥ अतएव भाष्ये वर्णानामनर्थकानां प्रातिपदिकसंज्ञा माभूदित्यर्थवदित्युक्तं॥ ननु प्रत्ययस्य
माभूदिति॥ नन्वोदनं पचतीत्यत्रौदनं पचेत्यस्य देवदत्तस्य पुत्र इत्यत्र पुत्रेत्यस्य देवदत्तो गार्ग्येति समुदायस्य च प्रातिपदिक
त्वापत्तिः॥ अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययादेरोदनं पचतीत्यादेश्च लोकेऽर्थबोधनशक्तिकल्पनेपि ओदनं पचेत्यादेः समुदा
यस्य तत्कल्पने मानाभावात्॥ प्रत्ययपर्युदासस्तु नास्त्येव प्रत्ययस्य फलाभावेनैव प्रातिपदिकत्वाप्रवृत्तेः॥ न च हरिष्वित्यत्र
प्रत्ययस्य प्रातिपदिकत्वे औत्सर्गिकैकवचने च तस्य श्रवणापत्तिः॥ तस्य सति गमक एवोत्पत्तेः॥ अत एव ङ्याप्प्रातिपदिका
दिति सूत्रे भाष्ये तदधिकारस्यासत्वे प्रत्ययादौत्सर्गिकैकवचनापत्तिर्नापादिता न चैवं धनं वनमित्यादावपि विभक्त्यनुत्पत्ताव
र्थवदिति व्यर्थमिति वाच्यं॥ निपातस्यानर्थकस्य प्रातिपदिकत्वविधानेनार्थवत्सूत्रस्य शेषभाष्यप्रामाण्येन चानर्थकप्रातिपु
दिकादेकवचनोत्पत्त्यभ्यनुज्ञानात्॥ न च कांडे इत्यादौ प्रत्ययस्य प्रातिपदिकत्वे ह्रस्वापत्तिः॥ नपुंसके वर्तमानत्वाभावेनादो

वि॰
५६

षात्॥स्पष्टंचेदंभाष्ये॥नचव्यपदेशिवद्भावेनप्रातिपदिकावयवसुव् लुगापत्तिः॥सुप्कार्यत्वलुक्समासेचरितार्थमितिवाच्यं
धातुसाहचर्येणमुख्यावयवएवसुब्लुक्प्रवृत्तेः॥नचौपगवयतीत्यादावणोणिजापत्तिः॥उपग्वर्थेनैकार्थी भूतत्वेनाणर्थ-
मात्रस्यणिजर्थेनान्वयायोगात्॥उत्तरसूत्रेतुशब्दाधिकाराश्रयणेनप्राशस्त्येमतुपाप्राशस्त्यार्थवत्वंविवक्षितं॥तच्चएषगु
पस्थितयोरर्थयोरन्वयबोधजनकत्वं॥एकार्थी भावयत्वंवा लौकिकार्थप्रत्यासन्नत्वमपिलौकिकार्थसदृशत्वं लौकिका
र्थोयथायोग्येतरान्विता स दृशत्वं॥पंचगवइत्यादौतुतस्थितांतत्वेनप्रातिपदिकत्वेपिनटाप्॥स्वार्थिकानांक्वचित्प्रकृतितोलिं
गवचनातिवृत्याऽर्धनावमित्यादाविवक्लीबत्वाश्रयणेनादोषात्॥विशेषणपदार्थेस्त्रीत्वस्यानभ्युपगमाच्च॥प्रियतिसेत्यादौतुभा
ष्यप्रामाण्येनभौतपोर्विकंस्त्रीत्वमादायतिस्रादेशः॥विभक्तीतरेसाद्युक्तार्थवत्वंतुगुरुतरमनेकदोषदुष्टंच॥अर्थवदितितु
धनंवनमित्यादौवर्णानांप्रातिपदिकत्ववारणायोत्सर्गिकैकवचनोत्पत्तेरुक्तदिशाऽपादयितुंशक्यत्वात्॥अथवाहरिषुकरो
षीत्यादौषुकरोषीतिसुप्तिङंतसमुदायस्यानर्थकस्यप्रातिपदिकत्ववारणायतत्॥तस्यप्रातिपदिकत्वेतुसुपोधात्वितिलुगाप
त्तिः॥समासग्रहणकृतनियमेनतुनवारणं॥पूर्वभागस्याऽपदत्वात्॥तदेतदभिप्रेत्योक्तंभाष्येऽर्थवदितिव्यपदेशायेति॥विशि

ष्टसंज्ञिनो निर्दिश्यायेतितदर्थः॥ वर्णानांचमाभूदित्युत्तरभाष्यंतुप्रत्युदाहरणदिक्प्रदर्शनपरं॥ दशदाडिमानीतिनिरर्थकपद
समुदायस्तुनव्यावर्त्यः॥ समासग्रहणकृतनियमेनैवव्यावर्त्तनात्॥ नचार्थवत्तायःसमुदायोर्थवान्सएवनियमव्यावर्त्यइति
वाच्यं॥ व्यावर्त्यसमुदायस्यार्थवत्वविशेषणवैयर्थ्यात्॥ भाष्येतुदशदाडिमानीतिपदसमुदायस्यानर्थकस्यप्रातिपदिकत्व
माशंक्यानर्थकत्वेनपरिहृत्यततोदेवदत्तगाम्भ्याजशुक्ला मितिसार्थकवाक्यस्यतदाशंक्यसमासग्रहणकृतनियमेनवा
रितं॥ नत्वर्थवदित्यस्यतद्व्यावर्त्ततयाप्रदर्शितं॥ समासग्रहणकृतनियमस्यासाधारणंप्रयोजनंप्रदर्शयितुमेवानर्थकसमुदा
यस्यार्थवदित्यनेनव्यावृत्तिः प्रदर्शिता॥ नतुतस्यतदेवव्यावर्त्यमित्यभिप्रेत्य॥ अप्रत्ययइतितुप्रसज्यप्रतिषेधः॥ तेनकांडे
हराविंत्यादौपूर्वांतवत्वेनप्राप्तस्यापिप्रातिपदिकत्वस्यनिषेधसिद्धिः॥ अन्यथाप्रतिषेधस्यशास्त्रविहितत्वाभावेनस्यानि
वत्वांतवत्वयोरप्रवृत्तौप्रातिपदिकत्वेलुगापत्तिः॥ शास्त्रतात्पर्यविषयस्यापिशास्त्रीयत्वेतुनमानं॥ अन्यथाऽज्भिन्नेऽयादे
शस्यापिशास्त्रतात्पर्यविषयत्वेनतस्मिन्नपिस्थानिवद्भावापत्तौनायकइत्यादावयादेशनापत्तिः॥ अतएवप्रसज्यप्रतिषेध
एवब्रह्मबंधूरित्यादौप्रातिपदिकत्वंनस्यादित्युक्तंभाष्येनपर्युदासे॥ अथवापुनरस्तुपर्युदासइतिभाष्यंतुप्रौढिवादपरं॥ अ

न्यथाकांडेइत्यत्र ह्रस्वस्य कथंचिद्दारणेपिसुपोधात्वितिलुकः प्रसंगात्॥अंतादिवत्त्वयोरेकत्रार्थेऽनाम्नयणेनोभयतआ
म्नयणेइतिनिषेधाप्रवृत्तेः॥तस्यव्यपवर्गविषयत्वाच्च॥अस्योदाहरणंत्वव्युत्पत्तिपक्षेघटः पटइत्यादि॥व्युत्पत्तिपक्षेतुबहुपट
वः परमगार्ग्यायणः शिवभागवतः राजकुमारीश्रितइत्याद्युदाहरणं॥गार्ग्यभगवत्शब्दाभ्यांसुप्फगणप्रवृत्याशिवपरमे
त्येतत्सहितस्यातत्धितांतत्वात्राजन्ङ्सुकुमारीअमित्यस्यांदशायांषष्ठीतत्पुरुषयोर्द्वितीयातत्पुरुषयोर्युगपत्प्रवृत्यास
मुदायस्यासमासत्वात्॥इत्याहुः॥कृत्तत्धितसमासाश्च॥चक्रपाण्युक्तदूषणमुत्धर्तुमाह॥एतेनेति॥साजात्यप्रदर्शनमात्रा
भिप्रायकत्वेनेत्यर्थः॥अर्थाननुगमेपिशब्दानुगमोस्त्येवेत्याशंक्याह॥शब्दानुगमस्येति॥अर्थस्यैवनियमशरीरेनिवेशादिति
भावः॥व्यवच्छेद्याननुगमेपीति॥संग्राह्यस्यैवानुगमः॥यथासास्नादिमत्त्वंगोर्लक्षणमित्यत्रसंग्राह्याणांसकलगोव्यक्तीना
मनुगमः॥व्यवच्छेद्यंमहिष्यादिकंतुनकोप्यनुगमयति॥यथाचभगवान्पाणिनिः संग्राह्यान्साधुशब्दानेवानुगमयतिनासाधु
शब्दानितिभावः॥अपास्तमिति॥साजात्यप्रदर्शनार्थमेवयत्रसंघातइतिमूलस्यप्रवृत्तत्वेनानुगमस्यसंभवेप्यनुपयोगेपिसत्य
भावादितिभावः॥वस्तुतोद्वावपिस्थूलदृश्वानौ॥तथाहि॥पदसंज्ञकपूर्वभागघटितत्वस्यअनुगमरूपस्यसंभवात्॥गामानये

त्यादेरिवबहुपटवदित्यादेरपिप्रातिपदिकत्वाभाववारणायव्यवच्छेद्यानुगमस्यावश्यकत्वाच्च॥ व्यवच्छेद्यानुगमस्यासंभवम
नुपयोगंचवदन् चक्रपाणिः स्थूलदृष्ट्या॥ तदेतद्द्वयमभ्युपेत्यसाजात्यप्रदर्शनार्थत्वंवदन्नप्यीतिस्थूलदृष्ट्या॥ यत्तच्छब्दा
र्थयोरननुगमेसाजात्यस्यैवासंभवात्॥ समासवाक्ययोरेकधर्मवत्त्वंहिसाजात्यं॥ व्यवच्छेद्यानुगमस्यानावश्यकत्वेसाजात्य
प्रदर्शनानुपयोगाच्च॥ ननुवाक्यसंज्ञावारणायार्थवत्समुदायानामितिनियमशरीरमुक्त्वाबहुपटवदित्यादौदोषमाशंक्यसुबं
तानांसमुदायस्यसमासग्रहणंनियमार्थमित्युक्तंभाष्येनतुस्वातंत्र्येणप्रयोगार्हेतिविशेषणेनपूर्वोक्तनियमशरीरस्थापित
मित्याशंक्याह॥ भाष्येसुबंतानामित्यनेति॥ तथाचसुबंतानामितिभाष्येणपूर्वोक्तनियमशरीरेस्वातंत्र्येणप्रयोगार्हेतिविशे
षणंदेयमित्युक्तंभवतीतिभावः॥ भेदेपृथक्प्रयोगेक्रियमाणेयाऽऽकांक्षातन्मूलकोयःसंसर्गःपरस्परमन्वयइत्यर्थः॥ भा
ष्यासंगतिःस्पष्टैवेति॥ इदमयुक्तं॥ तद्धितांतत्वप्रयुक्तप्रातिपदिकसंज्ञायास्तदादिनियमाश्रयणेनवारणेप्यर्थवत्सूत्रेणत
स्यादुर्वारत्वात्॥ किंचतदादिनियमाभावेदेवदत्तोगार्ग्येतिसमुदायस्यतद्धितांतत्वेनप्रातिपदिकत्वमापादितंभाष्ये॥ तदे
नींचनसमासग्रहणस्यनियमार्थत्वं॥ समासस्यप्रत्ययांतत्वात्॥ तदादिनियमस्यचाभावात्॥ किंतुविध्यर्थमेव॥ तथाचदे

वदत्तोगार्ग्यैतिसमुदायस्यसूपपन्नंप्रातिपदिकत्वापादनं॥ किंचकुंभकारेत्यादिसमासेउत्तरभागस्यस्वातंत्र्येणप्रयोगार्ह
त्वाभावेनमुक्तीकृत्येत्यादौकृभ्वस्तियोगेएवच्वेःसाधुत्वात्कृभ्वस्तीन्विनामुक्तीत्यादिपूर्वभागस्यस्वातंत्र्येणप्रयोगार्हत्वाभा
वेनचपटुपटुएकैकमित्यादेद्वितिदिष्टसमासत्वमाश्रित्यप्रातिपदिकत्वस्यवक्तव्यतयातद्धटकपूर्वोत्तरभागयोःस्वातंत्र्येण
प्रयोगार्हार्थकत्वभावेनचस्वातंत्र्येणप्रयोगार्हार्थवत्पूर्वोत्तरभागकत्वंनसमासमात्रेस्तीतिसमासत्साजात्येननियमशरीरेना
यंधर्मःप्रवेष्टुंशक्यः॥एवंपंचगवधनइत्यादिसमासेपंचगवेतिपूर्वभागस्यनस्वातंत्र्येणप्रयोगार्हत्वं॥ किंचैधामासमूल
केनोपदंशाइत्यादिवाक्येऽर्थवत्सूत्रेणप्रातिपदिकत्वंदुर्वारं॥एधामासेत्यनयोःपरस्परपरिहारेणोपदंशमित्यस्यमूलकेने
त्येतत्परिहारेणप्रयोगार्हत्वाभावेनोक्तनियमेनाव्यावृत्तेः॥तस्मात्षष्ठीनिर्देशादिभिर्येसुबंतानांसमासाविहितास्तदेकवा
क्यतापन्नंयत्कृत्तद्धितसमासाश्चेतितत्सुबंतानांसमुदायस्यसमाससंज्ञानियमपरं॥ तेननीलोघटइत्यादेःसमुदायस्य
प्रातिपदिकत्वव्यावृत्तिः॥नचैवंगवित्ययमाहेत्यादौदोषः॥गवितीत्यस्यप्रातिपदिकत्वेपिसत्यभावात्॥गवित्ययमितिस
मुदायस्यतुसुबंतसमुदायत्वेनैववारणात्॥देवदत्तोगवित्याहेत्यत्रतुदेवदत्तोवित्यस्यनप्रातिपदिकत्वंपरस्परानन्वयेन

नर्थकत्वात्॥अनुकार्यानुकरणयोर्भेदविवक्षायास्त्ववक्ष्यमाणत्वेनगवित्यस्यासुबंतस्यासाधुत्वाच्च॥नन्वेवमपिवृत्रअहनिति
समुदायस्यप्रातिपदिकत्वंदुर्वारं॥सुबंतसमुदायत्वाभावेनोक्तनियमेनाव्यावृत्तेरितिचेन्न॥जहिकर्मणेत्येतदेकवाक्यताप
न्नेनानेनसुप्तिङंतसमुदायस्यापिप्रातिपदिकत्वनियमनात्॥नन्वेवमपिपचतिभवतीत्येतत्समुदायस्यप्रातिपदिकत्वंदुर्वा
रं॥उक्तनियमद्वयाविषयत्वादितिचेन्न॥आख्यातमाख्यातेनेत्येतदेकवाक्यतापन्नेनानेनतिङंतसमुदायस्यापिप्रातिपदि
कत्ववारणात्॥तदेतदभिप्रेत्यार्थवत्सूत्रेभगवताभाष्यकृतोक्तं॥तुल्यजातीयस्यनियमोयथाजातीयकानांचसमासःसुबंता
नांचसमासःसुप्तिङ्समुदायस्यतर्हिप्राप्नोति॥सुप्तिङ्समुदायस्यापिप्रातिपदिकसंज्ञाऽरभ्यते।जहिकर्मणेति॥सानियमा
र्थाभविष्यति॥तिङ्समुदायस्यापितर्हिप्राप्नोतितिङ्समुदायस्यापिप्रातिपदिकसंज्ञाऽरभ्यते॥आख्यातमाख्यातेनेति॥सा
नियमाऽर्थाभविष्यतीति॥नन्वेवमपिदेवदत्तस्यपुत्रइत्यत्र पुत्रइत्यस्यओदनंपचतीत्यत्रओदनंपचेत्यस्यअजागमय
तीत्यत्राजागमीत्यस्यप्रातिपदिकत्वंस्यात्॥नचाद्येविभक्तीतरदेवदत्तेत्यपेक्षयां चैतत्संज्ञाफलभूतविभक्तीतरतिङपे
क्षयार्थबोधकत्वेनैतत्संज्ञेत्यांद्यर्थवत्वाभावान्नप्रातिपदिकत्वमितिवाच्यं॥ईदृशार्थवत्वस्यभवद्भिरनंगीकारात्॥एवंभूतत्ता

यामित्यस्यप्रातिपदिकत्वंदुर्वारं॥भूइत्यस्यसुप्तिङंतभिन्नत्वेनोक्तनियमत्रयाविषयत्वात्॥एतेनकटप्रुजुश्रीणामित्येतदेकवा
क्यतापन्नेनकृत्तद्धितेत्यनेनधातुसुबंतसमुदायस्योपपदमतिङि॰त्येतदेकवाक्यतापन्नेनचानेनसुबंतसुप्तिङ्॰भिन्नप्रत्ययांत
समुदायस्यप्रातिपदिकत्वनियमा न्नदोषइतिपरास्तं॥देवदत्तस्यपुत्रइत्यादौदोषानिवारणाच्चेतिचेत्सत्यं॥प्रकृतिप्रत्यय
योरन्वयव्यतिरेकाभ्यांपदवाक्ययोश्चलोकेऽर्थबोधजनकत्वेनवृत्तिकल्पनेपिस्यपुत्रइत्यादेस्तत्कल्पनेमानाभावेनवृत्त्याऽर्थ
वत्वाभावादेवादोषात्॥कटप्रूपाचककुंभकारादौतुसमर्थःपदविधिरितिशास्त्रप्रामाण्यादेववृत्तिमत्वं॥उपपदमतिङि॰त्येतदेक
वाक्यतापन्नेनकृत्तद्धितेत्यनेनसुबंतप्रातिपदिकसमुदायस्यप्रातिपदिकत्वनियमनात्नभूसत्तायामित्यत्रदोषः॥भेदविवक्ष
याभूइत्यस्यप्रातिपदिकत्वान्निर्देशात्सुबुत्पत्तिर्नेत्यन्यत्॥कटप्रूइत्येतदेकवाक्यतापन्नेनधातुसुबंतसमुदायस्यप्रातिपदि
कत्वनियम नाच्च॥प्रकृतिवदनुकरणमितिप्रूइत्यस्यापिधातुत्वात्॥अतएवसुबनुत्पत्तिः॥नियमत्रयप्रदर्शनपरंभाष्यंतूपल
क्षणं नन्वेवमपिपचतिपचतितरामि तिद्विर्वचनात्तरपितिङंतसमुदायसत्वेननियमव्यावर्त्यापातः॥एवंशिवभागवतइत्य
स्यापिनियमव्यावर्त्यतापातः॥सुबंतसमुदायसत्वादितिचेन्न॥तिङंतसुबंतमात्रघटितसमुदायस्यैवतेनव्यावर्त्तनात्॥एतेन

प्रत्ययांतानांसमुदायस्यचेत्प्रातिपदिकत्वंतर्हिसमासस्यैवेत्येकएवनियमोस्तुकृतंनियमत्रयेणेत्यपास्तं॥प्रत्ययांतमात्रघटि
तेतिपरिष्कारासंभवेनोक्तस्थलेपाचकिरित्यादौचदोषापत्तेः॥नचप्रकृतिप्रत्ययभावापन्नसमुदायविषयकएकएवनिय
मोस्त्वितिवाच्यं॥पचतितरामित्यत्रातिव्याप्तेः॥तरामित्यस्याप्रत्ययत्वात्॥यदिचप्रकृतिप्रत्ययभावानापन्नौयावर्थवंतावि
त्युच्यतेतदापिपचतिआमितिभागद्वयमादायतत्रातिव्याप्तिः॥उक्तभागद्वयस्यप्रकृतिप्रत्ययभावामापन्नत्वात्॥आमस्तिङं
ताप्रकृतिकत्वात्कथंचित्तत्रातिव्याप्तिवारणेउक्तधर्मद्वयस्यसमाससमात्रवृत्तित्वासंभवः॥बहुखट्वकइत्यादिसमासेपूर्वोत्तरभा
गयोःकबहुखट्वइत्यनयोःप्रकृतिप्रत्ययभावापन्नत्वात्॥कपःसमासांतावयवत्वेनकांतस्यसमासत्वात्॥भागवतशिवेत्य
नयोःप्रकृतिप्रत्ययाभावानापन्नत्वादर्थवत्वाच्चशिवभागवताइत्यस्यनियमव्यावर्त्यत्वापाताच्च॥नन्वेवमपिराजकुमारीश्रि
तइत्यत्रयुगपद्वृत्तिद्वयपक्षेप्रातिपदिकत्वानापत्तिः॥सुबंतमात्रस मुदायत्वादितिचेन्न॥युगपद्वृत्तिद्वयोत्तरंराजकुमा
रीत्यस्यसमासत्वात्प्रातिपदिकत्वेनपुनःसुपिपुनर्द्वितीयातत्पुरुषेणादोषात्॥श्रितेत्यस्यप्रत्ययलक्षणेनसुबंतत्वादुत्तरपदे
चेतिनिषेधस्यपदांतविधावेवप्रवृत्तेः॥केचित्तुनियमस्यपरस्परासमानाधिकरणसमाससंज्ञाश्रयाघटितसुबंतसमुदाय

विषयकत्वान्नोक्तदोषइतितन्न॥राजकुमारीश्रितस्यपुत्रइतिवाक्येप्रातिपदिकत्वापत्तेः॥उक्तद्व्याश्रयघटितत्वसमास
त्वानाश्रयघटितत्वोभयाभावनिवेशेपिराजाकुमारीश्रितस्यसुंदरवाक्येतदापत्तिरितिदिक्॥उक्तद्व्याश्रयघटितत्वैकार्थीभा
वपर्याप्त्यधिकरणत्वोभ याभावनिवेशोनसंभवतिराजकुमारीश्रितपुत्रेतदभावात्॥राजकुमारीश्रितोमूलकेनोपदंशमि
त्यादौदोषाच्च॥अत्रकुमारी श्रितशब्दादेवसुवुत्पत्तिरित्यपिकश्चित्॥ननुशशशृंगादिसमासेशशशृंगादेरलीकत्वेनानर्थक
त्वात्प्रातिपदिकत्वाप्राप्तौसमासग्रहणंविध्यर्थमेवस्यान्ननियमार्थमित्याशंक्याह॥शशशृंगादिपदानामिति॥विप्रपृष्ट्वा
दिचित्तस्कंनबहिष्ठंकदाचन॥स्वप्नभ्रममदाद्येषुसर्वैरेवानुभूयतइतिकौर्मस्मृतेरनादिवासनारूपेणांतरवस्थितरजतादेः
कामादिवृत्तिसहकारेणवहिर्विषयप्रदेशेआगमंस्वाकारेणविषयभासनंचनतुवाह्यः॥कोपिविषयस्यविशेषाकारोस्ति॥नच
सौत्रांतिकमतप्रवेशः॥तेनतत्रारोपितसत्तायाअप्यनंगीकारादितिभावः॥तदुक्तंतदस्यास्त्यस्मिन्नितिसूत्रेनसत्तापदार्थोव्य
भिचरतीतिभाष्यव्याख्यावसरेकैयटे॥यदितुवृक्षादिनाबाह्यसत्तासमाविष्टंवस्तुवाच्यंस्यात्॥ततोवृक्षइत्यस्मात्सत्तावगमा
दस्तीत्यस्यगतार्थत्वात्प्रयोगोनस्यात्॥नास्तीत्यस्यचसत्ताविरोधात्प्रयोगाप्रसंगः॥अंकुरोजायतइतिचप्रयोगोनस्यात्॥सतो

जन्मविरोधात्॥ वीत्थसत्तायांतेदोषानावतरंति॥ वुध्दिसत्तासमाविष्टस्यवहिः सत्वासत्वजननप्रतिपादनायास्तिनास्तिजा
यतइतिप्रयोगादिति॥ नन्वक्षौहिण्यादौसमासेस्वातंत्र्येणप्रयोगार्हार्थवत्समुदायत्वंनविद्यतेतदवयवानांनिरर्थकत्वादि
त्याशंकते॥ अक्षौहिणीत्यादीति॥ अन्यत्रदृष्टार्थारोपेणेति॥ प्रातिपदिकत्वसिध्दयेऽर्थवत्वारोपस्यावश्यकतयालतएव
समासेर्थवत्समुदायत्वंसूपपादमितिभावः॥ विकारागमेतिपाठः॥ एवमग्रेपि॥ तमुच्चार्येति॥ अर्थबोधकशब्दमुच्चार्येत्य
र्थः॥ नभवधाद्यादेशानामितिनाभिनंच॥ हनश्चवधः॥ आदिपदाद्दिरागविरंगचेत्यस्यसंग्रहः॥ ष्मकजिति॥ ष्मिप्रत्य
यात्वाभावेशकारस्येत्संज्ञानस्यात्॥ अकच्चितदभावेसर्विकेत्यादावित्वंनस्यात्॥ बहुचितुफलंचिंत्यं॥ इतिदिगिति॥ अन्येतुत्
णहइतिनिर्देशात्प्रत्ययपरत्वाभावेपिप्रत्ययइत्यस्योपस्थितिः॥ वहुचितुप्रत्ययत्वस्यनफलं॥ अव्ययसर्वनाम्नामित्यत्रापिप्र
त्ययइत्यस्यसंबंधः॥ नयासयोरितिज्ञापकात्॥ एवंचयत्रागमकंतत्रपरश्चेत्येतत्संन्नियोगशिष्टस्यप्रत्ययइत्यस्यासंबंधः॥ आ
घुदात्तश्चेत्यनेननतुसन्नियोगशिष्टत्वं॥ विप्रकृष्टत्वात्॥ तेनक्विबिजादेः प्रत्ययसंज्ञासिध्दिः॥ किंचेत्याद्युक्तमपिदूषणम्॥ दे
कांशेनिराकांक्षत्वेपिपरश्चेत्यस्यसंभवमात्रेणसंबंधसंभवः॥ विकारागमयोस्तुपंचम्यंताभावेनान्वयासंभवात्परश्चेत्यस्यानु

पस्थितिः॥नचसीयुटाव्यवधानात्धातोः परत्वासंभवः॥यासुट्परस्मैपदेष्विति सूत्रारंभसामर्थ्येनागमातिरिक्तकृतव्यवधा
नाभावस्यैवपरशब्दार्थत्वात्॥इतरथासीयुटइवयासुटोपिपूर्वंप्रवृत्त्यापरस्मैपदविषयाभावात्तदसंगतिः॥किंचस्यानिनः
प्रत्ययत्वनिर्णयेनपरश्चेत्यस्यासंबंधेपिप्रत्ययइत्यस्यतत्संनियोगशिष्टाद्युदात्तश्चेत्यच्संबंधः॥किंचपरश्चेत्यस्याप्रवृत्ता
वपिस्थानिवद्भावलब्धप्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वोपपत्तिः॥तदेतदभिप्रेत्यभगवताभाष्यकृतोक्तं॥विकारागमेषुच
परविज्ञानात्प्रत्ययसंज्ञानभविष्यतिप्रत्ययःपरोभवतीत्युच्यते॥नचविकारागमाःपरेसंभवंतीति॥प्रकृत्यर्थमात्रविवक्षायां
सित्थावस्थाद्यविवक्षायां॥ङ्याप्प्रातिपदिकात्॥तिङंतात्त्विति॥पश्यमृगोधावतीत्यादौ॥तिङोक्तत्वाच्चेति॥ननुधावतीतित्ति
ङनकर्तृगतासंख्याभिधीयतेनकर्मगतेतिचेन्न॥यास्का चार्यमतेतिङर्थकर्तृमुख्यविशेष्यकशाब्दबोधस्याप्यंगीकारा
त्॥यद्वातिङंतात्द्वितीयापाद्यमानाकिंप्रधानक्रियागतैकत्वमादायाहोस्वित्प्रधानक्रियागतसंख्यायाबाधात्तद्विशेषणक
र्त्रादिगतैकत्वमादाय॥आद्येसंख्याभावादित्युत्तरं॥द्वितीयेतिङोक्तत्वाच्चेति॥धावनकर्तुरेवदर्शनेकर्मत्वात्कर्तृगतसंख्या
याअभिहितत्वेकर्मगताअपितस्याअभिहितत्वमितिभावः॥तदेतदभिप्रेत्यभगवताभाष्यकृतोक्तम्॥तिङोक्ताएकत्वादय

इतितिङंतान्नस्वादयोभवंतीति॥ यद्यपिपचतिभवतीत्यादौप्रथमायाअप्यापादानसंभवः॥ तथापिप्रातिपदिकेत्याद्येक
वाक्यतयैवस्वादिसूत्रस्यविधायकत्वेनतिङंतस्यप्रातिपदिकत्वाभावेनप्रातिपदिकार्थाभावात्प्रथमानापादयितुंयुक्ताइ
त्याशयेनद्वितीयादिरित्युक्तं॥ केचित्वष्टाध्याय्यांकर्मणिद्वितीयेत्यस्यप्रथममुपादानात्तथोक्तिरित्याहुः॥ तेभ्यःतिङंतेभ्यः
प्रथमोच्चारितबोध्यादिति॥ तस्यापत्यमित्याद्यर्थबोधकशास्त्रेषुप्रथमोपात्तयत्तस्येत्यादितद्बोध्योयउपग्वादिसंबंधस्तद्बो
धकयत्उपगुडसइत्यादितस्मादित्यर्थः॥ प्राधान्यादिति॥ इदमयुक्तं॥ समर्थादितिसुबंतमेवविशेष्यतयाप्रज्ञातंनत्वन्य
त्॥ द्वयोर्हिविशेष्यतयासंभावनायामन्यतरस्यतथात्वनिश्चयायहेतूपन्यासोयुक्तः॥ ननुसर्वशब्दोप्याद्युदात्तएव स्वांगशि
टामदंतानामितिसूत्रेणततश्चप्रा तिपदिकादित्युक्तावप्युक्तदोषस्तदवस्थइत्यतआह॥ सर्वशब्दस्येति॥ कौस्तुभोक्तंदू
षयितुमुपन्यस्यति॥ नचेति॥ लुङ्निमित्तप्रत्ययादिति॥ सन्यायोलुकइवतदुपजीव्यस्यकार्यस्यापिप्राबल्यबोधकइतिभा
वः॥ सौवरीणां॥ स्वरविधायकशास्त्रभवानां॥ स्वरशब्दात्तत्रभवइत्यणिद्वारादीनांचेत्यैजागमः॥ आद्युदात्तत्वसिद्धिरिति। ना
न्वेवंसतिसर्वस्यसुपीत्यत्रसुपीतिंव्यर्थंस्यादितिचेत्सत्यं॥ किमस्माभिःकर्त्तुंशक्यंसर्वशब्दाद्याचार्याक्षिपितिपिचाद्युदात्तत्वाभावा

वि०
६२

र्थंवास्यात्प्रातिपदिकाधिकारेतुतस्यानुदात्तादितिविशेषणेविशिष्टस्यगभीरायांनद्यांघोषइत्यादाविवसमर्थादित्यनेनान्व
यार्थतत्प्रकृतिकेलक्षणायामनुदात्तादिप्रातिपदिकप्रकृतिकषष्ठ्यंतादञित्यर्थेनसिद्धेसार्वइत्यत्राञनापत्तिः॥षष्ठ्याअ
नुदात्तादिप्रकृतिकत्वात्॥षष्ठ्युत्पत्तिसमयेसर्वशब्दस्यांतोदात्तत्वात्॥एवंचसर्वस्यसुपीत्यत्रसुपीत्यपिसार्थकम्॥उंछादि
षुपाठःसफलः॥सर्व इत्यत्राञ्प्रवृत्तेरुभयफलत्वात्॥मानाभावादिति॥अनुदात्तादेरित्यस्यषष्ठ्यंतविशेषणत्वसंभ
वादितिभावः॥नलक्षणेति॥इदमयुक्तम्॥तथासतिसार्वइत्यत्राञनापत्तेः॥सुपिपरेसर्वस्यसुपीत्यस्यप्रवृत्त्यासर्वेतिप्राति
पदिकत्वस्या नुदात्तादित्वाभावात्॥ममतुसुपःपूर्वमनुदात्तादित्वेनानुदात्तादिप्रकृतिकषष्ठ्यंतत्वस्यतत्रसत्त्वेनात्रसु
लभः॥किंचपदोद्देश्यकविधित्वाभावेनसमर्थपरिभाषागौणमुख्यन्यायश्चतत्स्थितविधौनोपतिष्ठेयातां॥अधिकमग्रेवक्ष्या
मः॥प्रातिपदिकग्रहणस्यप्रयोजनांतरमपिभाष्योक्तंकिंचित्प्रदर्श्यते॥द्व्यचष्ठनितिवाचातरतीत्यत्रप्रसज्येत॥घटेनतरती
त्यत्रचनस्यात्समर्थसुबंतस्याद्व्यच्कत्वात्॥द्वितीयेतदभावात्॥नौग्रहणंतुनियमार्थंस्यात्॥बहुतरोदाहरणेति॥सर्वना
म्नस्तृतीयाचभवत्याहतोः॥कुसूलकूपकुंभशालंबिले॥कुसूलीबिलं॥पूर्वसदृशसमोना॥पित्रासदृशी॥तद्याप्यधर्माइति

आनुपूर्वी विशेषभिन्ना अपीत्यर्थः॥ अतएवानुपूर्वीविशेषव्याप्यधर्माणामप्यतिदेशादेवानद्यंतानां यो बहुव्रीहिरिति॥ न
नु नद्यंतसर्वावयवको यो बहुव्रीहिरित्यर्थे बहुकुमारीक इत्यत्र कब्नापत्तिः॥ नद्यंतावयवक इत्यर्थे कुमारीभार्या इत्यत्राति
प्रसंग इति चेन्न॥ नद्युत्तरपदक इत्यर्थेनादोषात्॥ अवयवविषय एवेति॥ मद्रराज्ञीत्यादिसमासावयवराजन्शब्दविषय
एवेत्यर्थः॥ तथा च समासघटकराजन्शब्दत्वादिकमेव समासांतविधावनया परिभाषयानातिदिश्यते॥ बहुव्रीहित्वादि
कं त्वतिदिश्यत एवेति भावः॥ इति चरितार्थमिति॥ तथा चार्थिकेत्यत्र नेत्वविकल्पः॥ अत्यंतस्वार्थिकेषु ङ्याप्ग्रहणासंबं
धेनापः पूर्वमेव कपः प्रवृत्तेः किंतु नित्यमेवेत्वं॥ न चैवं सति ङ्याप्ग्रहणवैयर्थ्यं॥ अत्यंतस्वार्थिकानामंतरंगत्वेन परत्वेन
च ङ्याब्भ्यां प्रागेवोत्पत्तेः॥ कुत्सिताद्यर्थकतद्धितानां तु कुत्सित इति सूत्रस्य भाष्योक्तरीत्या स्वार्थादिप्रयुक्तकार्याणां क्रमि
कत्वस्वीकारेण न्यायत एव ङ्यावंतादुत्पत्तिसिद्धेरिति वाच्यं॥ लिंगविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थत्वात्॥ तेन समा
सांतादिविधौ लिंगविशिष्टपरिभाषाया अप्रवृत्तिः॥ नन्वत्यंतस्वार्थिकेषु ङ्याप्ग्रहणासंबंधेपि घकालतनेष्विति ज्ञापकेन
तद्धितानां सुबंतादेवोत्पत्त्या लोहिताल्लिंगबाधनं वेति पुनरसंगतमित्यत आह॥ अत्यंतस्वार्थिकानामिति॥ अनंतर्भावादिति

एतदुत्तरमुन्नंतस्येतिशेष ः॥तस्यचद्विर्वचनाभावइत्यनेनान्वयः॥इदंचोक्तार्थानामितिन्यायमननुसंधायप्रवृत्तं॥एक
त्वंस्त्रीत्वंचोन्नतार्थ ः॥तद्युक्तस्यचावीप्सितत्वान्नवुन्नंतस्यद्वित्वमित्यर्थः॥विभक्त्यभावेनेति॥अत्यंतस्वार्थिकानांसु
बुत्पत्तेः पूर्वमेवोत्पत्तेरितिभावः॥नन्वेतद्भाष्यंसुबंतात्तद्धितोत्पत्तावप्युपपन्नम्॥नित्यत्वाद्दुनिअ कादेशेचभत्वेनपद
त्वाभावान्नतद्धितप्रकृतेर्द्वित्वं॥वीप्सायांत्रित्वैकत्वयोरनंतर्भावात्नतद्धितांतस्यपदस्य॥कैयटस्त्वसंगतएवेत्यरु
चेराह॥पुंयोगादितिसूत्रेइति॥अधिकसापेक्षत्वेनेति॥इनुणंतत्वरूपविशेषापेक्षत्वेनेत्यर्थः॥नचसुबंतद्वयसापेक्षस
मासापेक्षयैकंसुबंतापेक्षाणप्रत्ययस्यैवांतरंगत्वमितिवाच्यं॥एतद्भाष्यप्रामाण्येनपदद्वयसापेक्षादपिविशेषापेक्षस्यवहि
रंगत्वात्॥उक्तरीत्यैवेति ॥सामान्यापेक्षत्वेनेत्यर्थः॥उक्तदिशापदद्वयापेक्षत्वेपिसमासस्याणपेक्षयांतरंगत्वंबोध्यं॥अन्यत्र
विस्तरइति॥स्पष्टंचेदंसर्वमत्रत्यभाष्यकैयटयोः॥तत्रहिङ्याप्ग्रहणस्यकालितरेत्यादिप्रयोजनमुपन्यस्यतस्यबहुगोम
त्केत्यादौदोषमुद्भाव्यस्त्रीप्रत्ययोपिस्वार्थिकः समासांताअपिस्वार्थिकास्तत्रपरत्वात्समासांताभविष्यंतीत्युक्तं॥कालिकेत्या
दौस्त्रीप्रत्ययात्पूर्वंपरत्वादत्यंतस्वार्थिकेकनिप्रत्ययस्यादितीत्वेनसिद्धिः॥लोहिनीकेतितुलोहितात्लिंगबाधनंवेतिवचनेन

सिध्यतीत्युक्तंभाष्ये कैयटेच ङ्यापूग्रहणप्रत्याख्यानेनसमासांतेपरिहारः कालितरेत्यादौतु पूर्वोक्तन्यायेनांतरंगत्वात्स्त्रीप्र
त्ययेपकर्षप्रत्ययइत्युक्तं॥ एवंचात्यंतस्वार्थिकेकनिइत्वाधटितमार्यकेत्याद्यसाध्वेव॥ तत्रतत्रेति॥ टाङ·सीत्यादौ॥ विभक्ति
श्च॥ ननुस्त्रीणिस्त्रीणीत्यननुवर्त्यतिङ·एतन्मात्रानुवृत्तौविभक्तिपदेनैककप्रत्ययग्रहणात्प्रथमयोरित्यादौषण्णांप्रत्ययानांग्र
हणंनस्यात्किंतुद्वयोरेवतत्रसोरजादित्वाभावेनौजसोरेवग्रहणंस्यात्इत्याशंक्याह॥ प्रथमयोरिति॥ बहुवचनापत्तिरिति
द्व्येकेष्विति स्यादितिभावः॥ यत्तुस्वरितात्संहितायामितिसूत्रेकैयटव्याख्यावसरेद्व्येकेषामितिस्यादित्यभिनवविवरणेउक्तं
तद्भ्रमसात्॥ द्वंद्वेचेतिनिषेधेनसुडप्राप्तेः॥ भर्तृदारयोरिति॥ बहुवचनांतस्योत्तरपदत्वेबहुवचनमेव। पूर्वपदत्वेतुद्विवचनमि
त्यन्ये॥ एकदेशंविकृतन्यायेनेति॥ आनुमानिकस्यान्यादेशाभावेनेत्यर्थः॥ सरूपाणामेकशेषएकविभक्तौ॥ तंत्रस्योदाहर
णमाह॥ यथाभ्यामिति॥ भ्याम्यपीत्यर्थः॥ अन्येतुप्रातिपदिकानामेकशेषेमातृमात्रोः प्रतिषेधोवक्तव्यः माताचजनयित्रीमातारौ
चधान्यस्यमातृमातारइतिवैरूप्यविषयोदाहरणोपन्यासेनयस्यापिविभक्त्यंतानामेकशेषस्तेनापिमातृमात्रोः प्रतिषेधोव
क्तव्यस्तस्यापिसरूपाणिमातृभ्यांमातृभ्यांचेति॥ अथमतमेतत् विभक्त्यंतानांसारूप्येभवितव्यमेवैकशेषेणेत्यपिमभाष्ये

णचभ्याम्येकशेषोभवत्येव॥अर्थविप्रतिषेधादत्रैकशेषोनेतिकैयटोक्तंतुनयुक्तं॥तैरित्यनुप्रयोगेस्यर्थावगतिसंभवात्॥
साचतौचतैरित्येकशेषसंभवात्॥अर्थविप्रतिषेधेनैकशेषइतिवचनाभावाच्च॥अतएवप्रातिपदिकानामेकशेषइतिप
क्षेएकविभक्तौयानिसरूपाणितेषामेकशेषइतिएवकाराघटितोवाक्यार्थनिष्कर्षोभाष्यकृतादर्शितः॥ अपकर्षस्यभा
ष्यकृताकुत्राप्यनाश्रयणाच्च अतएवप्रातिपदिकतंत्रमाश्रित्यैकशेषप्रत्याख्यानेनफलभेदः॥तत्रहिमातृभ्यामित्यत्रसा
रूप्यंतत्रसंभवतिमातारावित्यादौचनेत्याहुः॥तत्चिंतांतादौवैरूप्यादिति॥तथाचयानिरूपाण्येवेत्युक्तौहरिणीशब्दयोरेक
शेषोनस्यात्॥एवकारानपकर्षेतुजननीवाचिपरिच्छेतृवाचिनोरेकशेषापत्तिरित्युभयतःपाशारज्जुरितितत्परिहाराय
विभक्तावित्यावश्यकमितिभावः॥अन्येत्वेवकारोनापकृष्यते॥भाष्येऽदर्शनात्॥मातृशब्दयोस्तूक्तयोर्भ्याम्येकशेषोभ
वत्येवेत्युक्तं॥एवंशत्रन्तङ्यंतकुमारीशब्दस्योजसोरेकशेषोभवत्येव॥श्वासितुन॥यण्पूर्वसवर्णाभ्यांरूपभेदात्॥मातृमा
त्रोःप्रतिषेधोवक्तव्यइतिवार्तिकंतूपलक्षणं॥एकविभक्तावितितुसहविवक्षायाउपलक्षणार्थं॥सहविवक्षायामेकविभक्तेरे
वदर्शनात्॥तदेतदभिप्रेत्यभगवताभाष्यकृतोक्तं॥एकविभक्तावितिकिमर्थं॥पयःपयोजरयतिवासोवासश्छादयतिब्राह्म

णाभ्यां कृतं ब्राह्मणाभ्यां देहीति असहविवक्षाविषयप्रत्युदाहरणदानेनैकविभक्तावित्यस्य सहविवक्षोपलक्षणत्वं स्पष्टमेव सूचितं विभक्तिः स्वरू
पेणाश्रीयत इति प्रातिपदिकैकशेषोपपादनप्रकरणस्थं भाष्यं त्वेकदेशियुक्तिः ॥ न चैवं सति मातृ मातरावित्यत्राप्येकशेषापत्तिः ॥ शिष्यमाणस्य क
तदीर्घत्वे च तेन जननीबोधासंभवेनाकृतदीर्घत्वे च तेन परिच्छेत्तृबोधासंभवेनैकशेषाप्रवृत्तेः ॥ एकशेषशास्त्रं हि एकस्यानेकार्थकतोत्पादकं
किंतु लोकसिद्धानुवादकं ॥ न हि लोके दीर्घोपधान्मातृशब्दाज्जननीबोधो ह्रस्वोपधाच्च परिच्छेत्तृबोधो दृष्टः ॥ तदेतदभिप्रेत्य भगवता भाष्यकृ
तोक्तं ॥ शब्दस्य स्वाभाविकी वाऽनेकार्थता स्यात् वाचनिकी वा ॥ तद्यदि तावत्स्वाभाविकी अशिष्य एकशेषः ॥ किं कारणमेकेनोक्तत्वात्तस्यार्थ
स्य द्वितीयस्य प्रयोगेण न भवितव्यं यदि तर्हि एकेनानेकस्याभिधानं भवति प्लक्षन्यग्रोधो एकेनोक्तत्वात् परस्य प्रयोगोऽनुपपन्नः ॥ इदानीमेवो
क्तमेकेनानेकस्याभिधानं भवतीति ॥ सरूपाणामेकेनानेकस्याभिधानं भवति न विरूपाणां ॥ किं कारणं सरूपाणामेकेनानेकस्याभिधानं भव
ति न विरूपाणामभिधानं पुनः स्वाभाविकमिति ॥ एतद्भाष्येण हि शिष्यमाणस्य स्वविरूपार्थबोधकत्वं स्पष्टमेवोक्तं ॥ अत एव ङीबंतङीषंतहरि
णीशब्दयोस्तत्स्थितविवक्षानिमित्तकपुंवद्भावापेक्षयाऽनैमित्तिकत्वेनांतरंगत्वादेकशेषे कृते स्वराभिन्नानामिति ङीबंतस्य शेषे तस्मात्तस्य समूह इ
त्यर्थेऽणि हारितमिति रूपं न भवति ॥ तथा च घटितस्य विरूपत्वेन हरिणीशब्दार्थाप्रतिपादकत्वात् ॥ यत्र तु तत्स्थिते द्वयोरूपं समानं तत्र भवत्ये ✤

वैकशेषः॥ यथाहरिण्योरपत्येहारिणेयाविति॥ अत्रभस्याढइतिपुंवद्भावोन॥ अढेइतिपर्युदासादित्याहुः॥ तंत्रस्योदाहरण
माह॥ यथाऽक्षाभज्यंतामित्यादि॥ यथाशब्दोऽत्रोदाहरणार्थोनदृष्टांतार्थः॥ अक्षशब्दःशकटाक्षस्यबिभीतकाक्षस्यदे
वनाक्षस्यचवाचकएकशेषेणतुनात्रनिर्वाहः॥ एकत्रानन्वयेनसहविवक्षायाअभावात्॥ तथाचतदर्थमावश्यकेनतंत्रे
णैवनिर्वाहेएकशेषारंभोव्यर्थइतिभावः॥ एकशेषानिर्वाह्यंस्थलांतरमाह॥ एवमक्षाभज्यतामिति॥ अत्रैकवचनांतत्वे
नैकशेषः शंकितुमशक्यइतिभावः॥ शब्दतंत्रमर्थतंत्रंचेति॥ अर्थस्यविजातीयत्वेशब्दस्यैकजातीयत्वेशब्दतंत्रं॥ अर्थस्यै
कजातीयत्वेऽर्थतंत्रं॥ पर्यायपरिवृत्त्यसहत्वेइति॥ पर्यायेणप्रवृत्तिःपरिवृत्तिस्तदसहत्वेइत्यर्थः॥ एकार्थकानांशब्दा
नांपर्यायेणैवार्थबोधनायप्रवृत्तिर्नयुगपद्भिन्नार्थकानामेकानुपूर्वीकाणामप्यक्षादिशब्दानांयुगपदेवार्थबोधनायप्रव
त्तिरर्थभेदात्॥ तथाचविभीतकाक्षबोधकाक्षशब्दस्यदेवनाक्षबोधकाक्षशब्देनसहपर्यायपरिवृत्त्यसहत्वेयुगपत्प्रयो
गार्हत्वेभिन्नार्थत्वेशब्दतंत्रमित्यर्थः॥ तत्सत्वेपर्यायपरिवृत्तिसहत्वेएकार्थत्वेइतियावत्॥ ननुतंत्रस्थलेबोत्धुरावृत्त्यैव
बोधः॥ एकशेषस्थलेतुनैवंतथाचकथंतंत्रेणनिर्वाहइत्याशंक्याहअन्वयिपदार्थभेदादिति॥ आवृत्त्यैवेति॥ शब्दावृत्त्याप

दार्थोपस्थितिरावृत्त्या चेत्यर्थः॥ दर्शनेनेति॥ घटोयं घटोयमित्यादौ॥ अन्यत्रासहविवक्षायां॥ सारवोर्मिज इति॥ सरवांभ
दार्थोपस्थित्यावृत्त्याचेत्यर्थः॥ दर्शनेनेति॥ घटोयंघटोयमित्यादौ॥ अन्यत्रासहविवक्षायां॥ सारवोर्मिजइति॥ सरवांभ
वः सारवः दांडिनायनेतिनिपातनात्साधुः॥ आरवेण सहितः सारवः॥ सारवश्चासौसारवश्चेतिकर्मधारयः॥ तथाचोक्तभा
ष्येण सारवेत्यादिमहाकविप्रयोगेण च सहविवक्षायामेवोक्तनियम इति सिद्धं केचित्तु तिष्यपुनर्वस्वोरिति सूत्रात् द्वंद्व इत्य
नुवर्त्य द्वंद्वे प्रसक्ते सत्येकशेष इत्याहुः॥ ननु सरूपाणामेकशेष एवेति नियमवत्सरूपाणां सहविवक्षायामेवैकशेषो नास
हविवक्षायामित्यपि नियमोंगीकार्यः॥ तेन तृतीयांत चतुर्थ्यंतयोर्ब्राह्मणाभ्यामित्यनयोर्ब्राह्मणाभ्यां कृतं ब्राह्मणाभ्यां देही
तिपृथक्प्रयोगः॥ नत्वेकस्य निवृत्तिः॥ अन्यथा ब्राह्मणाभ्यां कृतं देहीति प्रयोगापत्तिरित्याशंक्य द्वितीयनियमं स्वीकृत्योक्त
प्रयोगापादने नेष्टापत्तिमाह॥ असहविवक्षाविषयेणेति॥ पय इति॥ एकं प्रथमांतमेकं द्वितीयांतं॥ नीलोत्पलस्पर्धिनी
ति॥ एकं द्विवचनांतं नपुंसकं नेत्रे इत्यस्य विशेषणम्॥ एकं ङ्यंतं तनोर्विशेषणं॥ अन्यपदार्थावगतय इति॥ ननु चक्षिङोनुम्
व्यावृत्तये कर्मधारयस्यावश्यकत्वे एकमिदित्यदं व्यर्थमिति चेत्सत्यं॥ नन्वर्थे अर्थे प्रतित दपि प्रत्यर्थमिति घटघटाविति द्वंद्वः क
स्मान्न भवतीत्याशंक्याह॥ अनेकघटादिपदानामिति॥ तंत्रपर इति॥ एकशेषे द्विवचनापत्तेः॥ सहविवक्षाभावेन तदसंभवा

चेतिभावः॥इत्यर्थबोधयितुमिति॥एकग्रहणसामर्थ्यादप्यर्थातर्भावेणसमासः॥सरूपाणीत्यस्यविरूपाणिनेत्यर्थः॥एवंचै
षकारापकर्षोमास्तुतदपकर्षेतुत्कार्थसंपादकैकग्रहणंमास्त्वितिभावः॥दूषणंभाष्येउक्तमिति॥समाहारद्वंद्वविषयेएक
शेषेतुएतद्दूषणासंगतिरितिभावः॥अत्रवदंति॥सोयमाश्विकःसाचेयमाश्विकीतच्चेदमाश्विकंतदिदंसर्वमाश्विकं
॥ ॥ ॥ तानीमान्याश्विकानीतिअबहुप्रकृतीनांयत्रवृत्तिस्तत्रफलसेनेतिवार्त्तिकेनसमाहारेद्वंद्वस्यनिषिद्धत्वा
त्॥अप्रसंगात्द्वंद्वेप्रसक्तेविधीयमानएकशेषस्तदानप्राप्तः॥इतरेतरयोगद्वंद्वेतुप्रसक्तेएकशेषोविधेयइति बहुवचन
प्रसंगेएकशेषोविधीयतेबहुवचनेप्राप्तेएकवचनार्थमेकवचान्यतरस्यैमितिस्यात्। किंचानेनेतरेतरद्वंद्वयोगेएकशेषाभावोज्ञा
प्यतांतावतापितस्यसार्थक्यसंभवात्॥तस्माद्घटश्चघटश्चानयोःसमाहारेघटइत्येकशेषोभवत्येव नचनपुंसकत्वप्रसंगः॥
समाहारद्वंद्वएवतद्विधानात्॥एवंचघटघटइत्यादेरनभिधानंनाश्रयणीयमित्यपरमनुकूलमिति॥ अत्रब्रूमःसमाहारद्वं
द्वविषयेएकशेषप्रवृत्तौविभक्त्यंतानामेकशेषइतिपक्षेऽयंतर्हिदोषःकश्चिद्वचनलोपः॥द्विवच नबहुवचनविधिर्द्वंद्व
प्रतिषेधश्चेतिभाष्यंकश्चिदितिशिष्यमाणस्यैकवचनस्यलोपोवक्तव्यइतिकैयटग्रंथश्चव्याकुप्येत॥एकवचनांतस्यापि

साधुत्वेतुतदसंगतिः॥तेनैकवचनांतस्यासाधुत्वलाभात्॥एतद्भाष्यप्रामाण्यादेवसमाहारद्वंद्वविषयेनैकशेषः॥अतएवैकशे
षोदाहरणानिद्विवचनबहुवचनांतान्येवभगवताभाष्यकृताप्रदर्शितानि॥नत्वेकवचनांतानि॥सूत्रशेषेचभाष्येकेष्वर्थेषु
लौकिकाःशब्दान्प्रयुंजते॥लोकेचैकस्मिन्वृक्षइतिप्रयुंजते॥द्वयोर्वृक्षाविति॥बहुषुवृक्षाइतितेनगार्ग्योहंसःपिताइत्यादि
भ्यएकवचनांतेभ्यःक्रमेणगार्ग्यायणहंसीमातृबोधोन॥गंगायांमीनघोषावितिचन।निवृत्तभेदानामिति॥भेदेनाप्रतीयमा
नानामित्यर्थः॥तथाचतिङंतेभ्योऽभेदेनैवशब्दशक्तिस्वभावेनप्रतीत्यानानेकशब्दप्रयोगप्रसंगइतिभावः॥ननुमातृमात्रोःप्रति
षेधोवक्तव्यइतिवार्तिकप्रयोगःकथंएकशेषस्यदुर्वारत्वादितिचेन्नएकशेषेसतिविवक्षितार्थानवगमात्तदभावः॥एवंह्यत्र
र्थोविवक्षितोजननीवाचिनःपरिच्छेतृवाचिनश्चैकशेषप्रतिषेधोवक्तव्यइति॥एषचार्थोमात्रोरित्युक्तेनगम्यतइतिकैयटे
नसमाधानात्॥एतेनान्होमध्येवामनोरामरामावितिप्रयोगोपपत्तिःसंगच्छते॥अत्रचनोवयोधर्मविषमूलमूलेतिनिर्देशो
पिगमकः॥स्वरभिन्नानामिति॥भिन्नस्वराणामित्यर्थः॥ननुस्वरभेदेकथंसारूप्यमितिचेन्न॥रूप्यशब्देनवर्णानुपूर्व्याएवग्रह
णात्॥तथाचतृज्वत्क्रोष्टुरितिसूत्रेभाष्यं॥नहिस्वरोरूपवानिति॥नविभक्तौतुस्माः॥ननुप्राग्दिशीयविभक्तौनायंनिषेधःप्रव

वि॰
६०

र्तते इत्येवोदित्वेन ज्ञाप्यतामत आह॥ अत एवेति॥ उक्तज्ञाप्यांशं विहाय सामान्यतोऽनित्यत्वज्ञापनादेवेत्यर्थः॥ अन्यत्रेति॥ न चेत्तस्तकारे तत्फलं॥ अनुच्चारणेनाप्युपपत्तेः॥ एकवचनं॥ नन्वेकवचनग्रहणेन प्रत्ययग्रहणपरिभाषोपतिष्ठते॥ एकवचनपदस्य प्रत्ययमात्रबोधकत्वाभावात्॥ त्वमावेकवचन इत्यादावर्थबोधकत्वस्याप्यंगीकारात्॥ सुः संबुद्धिरित्युक्तौतूपतिष्ठेत॥ न च संज्ञाविधाविति निषेधः॥ यथा सामंत्रितशब्दयोगार्थोपपत्तये उक्तनिषेधाप्रवृत्त्या तदंतविधिस्तथात्रापि तदंतविधिशंकाया अनिवारणात्॥ * ॥ ✣ ॥ * ॥ आमंत्रणसाधनत्वस्येव संबोधनसाधनत्वस्यापि तदंत एव संभवादित्याशंक्याह॥ संबुद्धाविति॥ इत्यंशेति॥ संबुद्ध्याक्षिप्तस्येत्यर्थ इति भावः॥ फलाभावादिति॥ आक्षेपकोपपत्तिरूपाक्षेपफलाभावादित्यर्थः॥ संबुद्ध्युपपत्तिरिति॥ प्रयोग इति शेषः॥ तथा च प्रयोगे तदुपपत्तये प्रयोग एवाक्षेपः स्यान्न तु सूत्रे इति भावः॥ आक्षिप्तस्याक्षेपकानुपपादकत्वेनाक्षेपासंभवमुक्त्वाऽऽक्षेपमूलभूतानुपपत्तेरभावेनापि तदसंभवमाह॥ किं चेति॥ उक्तस्यार्थस्य यस्मात्स विहितस्तदादेरित्यर्थः स्यादत आहेति॥ अन्येत्वंगाक्षेपाभावेप्येङ्ह्रस्वात्परायाः संबुद्धिस्तस्या हलो लोप इत्यर्थे न हे कत्तरदित्यादौ संबुद्धिलोपवारणात्॥ अंगाक्षेपो व्यर्थ इत्याशंक्याह कुलेतीत्याहुः॥ ननु पौर्वापर्यभावोप्यंता

दिवद्भावेनैव साध्यतामत आह तादूप्यानतिदेशादिति॥ पौर्वापर्यानितिदेशादित्यर्थः॥ ह्रस्वांतत्वानतिदेशादितितु नार्थः। तस्यस्व तः सिद्धत्वेनातिदेशानपेक्षणात्॥ अन्याक्षिप्तस्य अन्योपस्थापितस्य॥ वस्तुतस्तु यद्येनोपस्थाप्यते तस्य तेनैवान्वय इति नियमे मानाभावः॥ गुणभुत्योपस्थापितस्यैक इत्यस्यांगेनान न्वयाद्यभिचारश्च ॥ यदि च तस्यांगद्वारा गुणेनान्वयस्तर्हि प्रकृतेपिह ल्द्वारा संबुत्थ्यान्वय इति तुल्यं॥ एतदर्थमेवेति॥ अंगादित्यस्य हल्यन्वयसूचनार्थमित्यर्थः॥ नन्वेवमपि कतरदित्यत्र लोपो दु र्वारः॥ अदंतस्य यस्माद्विहितस्तदादित्वात्॥ तकारस्य च संबुध्यवयवत्वादिति चेन्न॥ प्रत्ययघटकभागाघटितस्यैव तदादेर्ग्रह णेनादोषात्॥ न चैवं कुलेत्यत्र लोपानापत्तिः॥ मकारस्य संबुत्थ्यवयवत्वोपपादनायामित्यस्य परादिवद्भावेन संबुद्धित्वस्य व क्तव्यतया कुलेत्यंस्य प्रत्ययघटकभागघटितत्वादिति वाच्यं॥ संबुत्थ्यवयवत्वस्योपलक्षणत्वेन परादिवद्भावानाश्रयणेना दोषात्॥ मकारस्य संबुध्यवयवत्वं पूर्वमासीदेवेत्याशयात्॥ नन्वेङ्ह्रस्वात्परसंबुत्थेर्लोप इत्यर्थेपि कुलेत्यत्र लोपो भवत्येव एकदेशविकृतन्यायेन मस्य संबुद्धित्वात्॥ तथा चोक्तव्याख्यानक्लेशो व्यर्थ एवेत्याशंक्याह॥ मस्येति॥ संबुद्धित्वाभावादिति हेतौ ह्रस्वांतागात्परसंबुत्थेरभावादिति व्यवहितसाध्येनान्वयः॥ स्थानिभूताल्धर्मत्वेनेति॥ अल्स्थानिभूतो यः सुरिति समुदायस्त

कि॰ त्धर्मत्वाभावेनेत्यर्थः॥तथाचस्थानिवदादेश इत्यत्रस्थानिपदस्यादेशविधायकशास्त्रघटकस्थानषष्ठ्यंतपदजन्यप्राथमिको
६८ पस्थितिविषयपरत्वेपिसंबुद्धित्वस्यतत्धर्मत्वाभावादतिदेशोनस्यादितिशंकाभिप्रायः॥तस्यानल्विधित्वादिति॥तस्यसं
बुद्धित्वस्यानल् धर्मत्वादित्यर्थः॥ यथाश्रुतौ पूर्वोत्तरपक्षावसंगतावेव॥संबुद्धित्वस्यस्थानिभूताल् धर्मत्वशंकायाःसमुदा
यस्यामस्थानित्वोपपादनेनैवनिवारणीयतया संबुद्धिसंज्ञायाःसमुदायोद्देश्यकत्वोपपादनस्यासंगतत्वात्॥इदमयुक्तं
पूर्वोत्तरपक्षाभ्यांसंबुद्ध्यवयवत्वस्यविशेषणतायाएवावगमात्॥तत्रचोक्तरीत्यादोषात्॥अंगाधिकारस्यादिति॥एतेनां
गसंज्ञाकृतंबहिरंगत्वमुक्तं॥नन्वगुणबहिरंगत्वस्यपूर्वपक्षाभिप्रेतत्वेपरत्वान्नित्यत्वाच्चेतिसमाधानग्रंथासंगतिरितिवाच्यं
संज्ञाकृतबहिरंगत्वस्यामितिन्यासेपरत्वान्नुडित्यादिभाष्येणसमानाश्रयेत्वपरनिमित्तापेक्षत्वेनबहिरंगत्वस्यचानाश्रयणमिति
समाधानग्रंथाशयात्॥सामर्थ्यादेव॥एङ्ग्रहणसामर्थ्यादेव॥एङ्ह्रस्वग्रहणसामर्थ्याच्चेति॥ह्रस्वग्रहणंहेलक्ष्मीत्याद्यर्थं
सन्निपातपरिभाषयाह्रस्वस्यसंबुद्धिलोपानिमित्तत्वेतद्वैयर्थ्यं। अभ्युच्चयइति॥नित्यानित्ययोर्विप्रतिषेधायोगादितिभावः
अनवकाशत्वसंग्रहइति॥ननुत यासतिगुणेकृतेलोपाप्रसंगइतिचेन्न॥एङंतत्वनिमित्तकलोपप्रवृत्तेःसुलभत्वात्॥विष

यभेदे उत्सर्गापवादभावो नेति त्रिपथगायां निरूपितं न विस्मर्त्तव्यम्॥ त्रपोइत्यत्र लोपाप्राप्तिविषये गुणस्य चारितार्थ्याद्गुणस्य
न लोपापवादत्वमित्याशंक्याह॥ नपुंसकइति॥ बाधकाबाधितप्राप्तेरभावेपि प्राप्तिमात्रमस्त्येवेति भावः॥ द्विमात्रवारणायेति
नचैवं पूर्वसवर्णदीर्घेण सिद्ध्येरेतदेव यर्थ्य मिति वाच्यं॥ गौरीइत्यादौ त्रिमात्रप्रवृत्त्यर्थत्वात्॥ वाकंदसीत्यनेनैकवाक्यार्थत्वाच्च
तस्माच्छसः॥ ननु तस्मादिति मास्तु॥ अकइत्यनुवर्त्याकः परस्य नत्वविधानेन लिहइत्यादावदोषात्॥ नचादेः परस्येत्यादेर्न
कारेहरीनित्यत्र दीर्घश्रवणानापत्तिः॥ शसः सोनः पुंसीतिन्यासेनादोषात्॥ अकः परस्य शसः सस्य नइत्यर्थः॥ पूर्वसवर्णदी
र्घस्य तक्रकौंडिन्यन्यायेन बाधः स्यादिति तु न शंक्यं॥ पूर्वसवर्णदीर्घेऽकः परशसोऽसंभवेनोक्तन्यायाप्रवृत्तावनवकाशत्वेन
तंबाधित्वा नत्वे प्रवृत्ते पश्चात्तत्प्रवृत्तेः॥ ननु तितऊनित्यत्रोत्सर्गेकृते नत्वचारितार्थ्यादुक्तन्यायेन तस्य बाधे पुनरप्रवृत्तिरि
ति चेत्सत्यं॥ अकइत्यस्य सकारविशेषणत्वेनादोषात्॥ अकृच सामर्थ्यात्प्रत्ययानवयवस्तथा च पूर्वसवर्णदीर्घोत्तरमेव न
त्वप्रवृत्तिरिति न कश्चिद्दोषइत्यभिप्रायेण शंकते॥ तस्मादिति॥ किमिति॥ अट्कुप्वाङ्॥ तदुक्तित्वध्वननादिति॥ वस्तुतस्तु कं
तत्र मूर्धआर्भ्रादित्यादौ णत्ववारणाय तु नैवं व्यवायेनेति लघुन्यासेन सिद्ध्येऽट्कुपुग्रहणमेतैरेव व्यवायइत्यर्थकं भविष्यतीति

वि० माभ्यामित्यादावेवदीर्घःस्यान्नपचावइत्यादौ॥अप्रवृत्तिज्ञापनार्थमिति॥अन्येतुसुबामंत्रितइत्यतोऽनुवर्त्तमानसुप्पदव
७० न्मध्येयञीत्येतत्संबंधत्वेनतत्संबंधस्यनिवृत्त्यैसुप्प्रतिनेत्यत्रसुप्पदवन्मध्येयञीत्येतत्संबंधस्यहलीत्यस्यनिवृत्तयेझ
ल्ग्रहणंस्यादित्यज्ञापकमेत्वेसंनिपातपरिभाषाप्रवृत्त्यभावस्य॥तत्संबंधस्यानुवृत्तौतुरामेष्वित्यादौषत्वंनस्यात्॥सुपीत्य
स्यतुयञ्संबंधत्वेपिझल्ग्रहणसामर्थ्यात्केवलस्यानुवृत्तिः॥ किंचसुपांसुरितियादेशेएत्वाभावार्थंझल्ग्रहणंएत्वेस
न्निपातपरिभाषायाअप्रवृत्तौहलिसर्वेषामितिनिर्देशोगमकइत्याहुः॥नुमापत्तेरितिवार्णादांगमितिपरिभाषयागुणंबाधि
त्वेतिशेषः॥सन्निपातपरिभाषयानुम्वारणेतुतयैवगुणोपिनस्यादितिभावः॥इटितुएभ्यइत्यादौहलिलोपानापत्तिर्बो
ध्या॥बाधित्वेतिशेषइति॥यत्तुपाठकेनोक्तं॥एवंसतिषडित्यादौआंतरतम्यात्षकारएवस्यान्नटकारः॥अल्पप्राणतयाप्रयत्न
भेदात्॥तस्माच्चर्त्वस्यासिद्धत्वाज्जश्त्वंततश्चर्त्वमित्येवयुक्तमितितन्न॥उत्सर्गापवादभावपरित्यागेकारणाभावात्॥षडि
त्यादौतुनदोषः॥शासिदद्योः प्रतिषेधेनचर्विधौझल्पदेनचर्भिन्नस्यजश्विधौजश्भिन्नस्यग्रहणबोधनेनजश्त्वोत्तरमेवच
र्त्वप्रवृत्तेः॥समानाश्रयेचरितार्थस्यसवर्णदीर्घस्यव्याश्रयेगुणेनवैरूप्यसंपादकादेशाप्रवृत्तियोग्येचरितार्थस्यचर्त्वस्यसारू

प्यसंपादकादेशप्रवृत्तियोग्यस्थलेचर्त्वस्यासिद्धत्वेनतस्यजस्त्वेबाधनाच्च॥ अणुरपिविशेषोऽध्यवसायकपरइतिन्यायात्॥अ
न्येतुष्ट्रांताषडितिनिर्देशेनजस्त्वचर्त्वयोरुत्सर्गापवादभावएवनेत्यन्यथाजस्त्वंबाधित्वाचर्त्वेषकारस्यतदभावपक्षेजस्त्वे
नडकारस्यश्रवणापत्तौटांतनिर्देशानुपपत्तिः॥नचपुनर्भावोपक्रमाच्चर्त्वेतत्सिद्धिरितिवाच्यम्॥जस्त्वेपुनश्चर्त्वाभावस्योप
क्रमेपुनर्भावपक्षेचर्त्वाभावाश्रयणायोगात्॥तथात्वेशिशियतुरित्यादौद्वित्वेकृतेसंप्रसारणेशिशुवतुरितिस्यादित्याहुः॥व्य
र्थस्यादिति॥ननुतादेशेचयोर्द्वितीयाइतिथकारश्चर्त्वेतुतस्यासिद्धत्वात्सनेतिफलभेदान्नव्यर्थमितिचेन्न॥तथासतिचयोर्द्वि
तीयाइत्यस्यानंतरंसआर्द्धधातुकइतिकार्यम्॥शरीत्यनुवृत्त्याशरादावार्द्धधातुकेसस्यद्वितीयइत्यर्थः॥सर्चांतरतम्यात्थएव॥
तासस्त्योरित्यत्रसीतिकर्त्तव्यम्॥नचलाघवाभावः॥तकारंकृत्वाथकारकारणापेक्षयासाक्षात्थकारणाऽपेक्षप्रक्रियालाघवात्॥
थकाराभावेचखरिचेतिचर्त्वेनतकारः॥एवंसिद्धेतत्वविधानमित्याशयात्॥प्राचांमतेतस्यबहिरंगत्वेनासिद्धत्वात्द्वितीया
प्रवृत्तेश्च॥षडित्यत्रेति॥अनंतरत्वान्नृनद्यापइत्यत्रतदनुवृत्तिरुचिता॥ननुकष्टायक्रमणेइतिनिर्देशेनदीर्घमात्रेसन्निपात
परिभाषानप्रवर्त्तते॥अतएवानेमुगितिसूत्रेभाष्येमुडितिन्यासआपादितः॥नामीतिसूत्रेभाष्येचाग्नीनामित्युदाहृतं॥ननु

षितेत्यादिषु यन्मिति स्वरितत्वं बाधित्वा रामाणामित्यादौ नामीति दीर्घत्वं बाधि
कि° वृक्षाणामिति॥ परत्वात्सुपि चेत्यस्यन्याय्यत्वात्॥ नान्नलोप इति सूत्रस्थं शाकाराभावे यज्ञानामित्यादौ नामीति दीर्घत्वं बाधि
७१ त्वा परत्वान्नलोपः स्यादिति भाष्यं तु सुपि चेति दीर्घापेक्षया नलोपस्य नित्यत्वाभिप्रायमिति न तद्विरोधः॥ एवं च रामाणामितु
दाहरणे नामीत्यस्योपन्यासो न युक्त इत्याशंक्य समाधानांतरमाह॥ कृता कृतेति॥ नामीति सूत्रे भाष्ये ऽग्नीनामित्युदाहरणोप
न्यासस्त्वन्यथासिद्धत्वाभिप्रायः॥ न तु वृक्षाणामित्यस्यानुदाहरणत्वाभिप्राय इति भावः॥ अयादि बाधमाशंक्येति॥ इदं तु भाष्य
मायादयो वा गुपूधूपविच्छिपणिपनिभ्य आयः सार्वधातुक इति न्यासाभिप्रायं॥ व्युत्पत्तिपक्षे ज्ञापकमिति॥ अनभ्य इत्यादौ तु न
दोषः॥ पदद्वयाश्रयत्वेन बहिरंगत्वात्तया नुटो ऽसिद्धत्वात्॥ परं त्विदमुणादीनामव्युत्पत्तिपक्ष एवेति स्वसिद्धांतविरुद्धं। यत्तु कश्चित्
इनुटीति न्यासे सन्निपातपरिभाषया नुट् दीर्घनिमित्तं न स्यात् नामीति न्यासे तु नुटो न दीर्घनिमित्तत्वमिति न सन्निपातपरिभाषाविरोध इति तन्न नामीति न्यासे
पि नुटो घटकतया दीर्घनिमित्तत्वात्॥ नुटीति न्यासे पि कष्टायेति निर्देशेन दीर्घविधौ सन्निपातपरिभाषाप्रवृत्त्यभावकल्पनासं
भवात् च॥ इण् चेक् चेति इतरेतरद्वंद्वे द्विवचनमिति भ्रमनिरासायाह॥ वर्णग्रहणमिति॥ ठकारेति॥ वर्गद्वितीयो न प्रथमः॥ त
स्याल्पप्राणतया प्रयत्नभेदात्॥ द्वितीयमिति॥ ईश्वणामीषद्विवृतस्येत्येव सुवचं॥ सर्वादीनि सर्वनामानि॥ तद्गुणसंविज्ञान इति

तस्यान्यपदार्थस्य येगुणा विशेषणानि तेषां कार्यान्वयितया संविज्ञानं यत्रेति विग्रहः॥ संयोगेन समवायेन वा यत्र वर्तिपदार्थसं
बंधी अन्यपदार्थस्तत्र प्रायेणातद्गुणसंविज्ञानः यथा पीतांबरमानय लंबकर्णमानयेत्यादौ अन्यत्र त्वतद्गुणसंविज्ञानः॥ यथा चि
त्रगुमानयेत्यादौ॥ क्वचित्तु संयोगादिनावर्तिपदार्थसंबंधिनोन्यपदार्थत्वेपि अतद्गुणसंविज्ञानः॥ नागयज्ञोपवीती भोज्यतां लंब
कर्णो भोज्यतामित्यादौ॥ उद्भूतावयवभेद इति॥ उद्भूत आरोपितोऽवयवस्तत्सहचरिता संख्या यत्रेति बहुव्रीहिस्तदाह॥ आरोपि
तेति॥ नहि तदंतविधिं विनेति॥ इदमयुक्तं॥ इश्च ई च इतरश्चेति सर्वनामसंज्ञानिषेधार्थमावश्यकत्वात्॥ तस्मादन्वर्थसंज्ञासि
द्धसंज्ञी सर्वादिभिर्विशेष्यते अपूर्वो वा तदं तविधिरुपसंख्यायत इति कैयटोक्तमेव युक्तमिति केचित्॥ भाष्ये सूचितमिति॥ अ
स्मांगाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीत्येतत् सूत्रस्थ भाष्यसूचितमित्यर्थः॥ सर्वनाम्नोऽवयवटेरिति॥ न
तु सुबंतस्य टेः॥ तथा सति सर्वकाभ्यामित्यादौ दोषापत्तिः॥ ओकारसकारेति वार्तिकं तु युष्मदस्मच्छब्दविषयकं॥ अव्ययसर्व
नाम्नामित्यस्याश्रुतत्वात्तेन टेरित्यनेन संबंधः॥ प्रातिपदिकादिति चाव्ययसर्वनामात्मकप्रातिपदिकप्रकृतिकसुबंतपरं॥ प
रमत्वान्वयोत्तरं कुत्साद्यन्वयविवक्षायामिदं॥ कुत्साद्यन्वयोत्तरं परमत्वान्वये तु नेदमिति भावः॥ इदमयुक्तं॥ सर्वनामं प्रकृ

तिकसुबंतादित्यस्यानन्वयात्॥परमभवकानित्यत्रभवच्छब्दस्यप्रत्ययलक्षणेनसर्वनामप्रकृतिकसुबंतत्वेनाकच्सिद्धेः॥उत्त
रपदेचेतिनिषेधस्तुपदांतविधावेव॥भवन्मतेसुबुत्पत्त्यनंतरंप्रातिपदिकमेवप्रकृतितयाश्रित्याकच्प्रवृत्तेश्च॥परमत्वकुत्सयो
र्युगपदन्वयेयुगपदेवसमासतद्धितवृत्तिसंभवाच्च॥परमसर्वत्रेतितुकथंचिदुदाहरणंशक्यमुपपादयितुं॥परिनिष्ठितविभ
क्त्यासमासेपिसमुदायादुत्पन्नसप्तम्याःसर्वनामाप्रकृतिकत्वात्तदंतात्त्रलोऽसंभवात्॥घटस्यसर्वनामप्रकृतिकसप्तम्यंतत्वे
पितस्मात्त्रलिपरमादेस्तद्धितांतत्वाभावेनप्रातिपदिकत्वानापत्तिः॥शिवभागवतादाविवतदुपपादनेपितद्धितांतत्वाभावे
नसमुदायस्याव्ययत्वानापत्तिः॥तदनापत्तौसमुदायाद्विहितसुपोलुगनापत्तिः॥सर्वनाम्नःपरायासप्तमीतदंतात्त्रलित्यर्थेतु
तच्छब्दान्नपुंसकात्कपरंपदशब्दःप्रवृतिकसप्तम्यंतंयेइतिततस्त्रलापत्तिः॥परमसर्वेपरमविश्वेइतिभाष्योक्तंतदंतविधिप्र
योजनंतुसमीचीनं॥अवयवस्यसर्वनामत्वेततोजसोविहितत्वाभावेनशीभावानापत्तेः॥इतिचरितार्थमिति॥विहितविशेष
णाभावेसमुदायस्यविकल्पेप्यवयवस्यनित्यसर्वनामसंज्ञामादायनित्यंशीभावापत्तेः॥यद्यप्येवंसतिद्वंद्वेचेतिनिषेधवैयर्थ्यमपि
सुवचं॥तथाप्यामिसर्वनाम्नइत्यादौविशेषणंस्वीकृत्यजसःशीत्यत्रतदाश्रयणेविवदमानंप्रत्येवमुक्तं॥किंचसमुदायग त

कुत्साविवक्षायां कप्प्रत्ययार्थस्य निषेधः सार्थकस्तत्फलं वर्णाश्रमेतराणामित्यादौ सुडभाव इति मंतव्यं॥ अत्र यद्वक्तव्यं तदग्रेव
क्ष्यते॥ बोधरूपतत्प्रवृत्तिकाल इति॥ वस्तुतो बोधमात्रेन प्रवृत्तिः॥ किंतु पदैकवाक्यतयान्वयार्हस्य सर्वस्योपस्थितौ वाक्या
र्थबोधे वृत्ते पश्चाद्वाक्यैकवाक्यतयान्वयार्हपरिभाषोपस्थितौ तदेकवाक्यतया महावाक्यार्थबोधः॥ तन्मूलक अस्मादयमि
तिशृंगग्राहकतयोपप्लूयमानवाक्यार्थबोधो बालस्ये प्रवृत्तिः॥ अस्यां च दशायां कादेरनुबंधत्वं ज्ञातुं सुशकमेव॥ प्राहुरिति॥ अन्ये तु
नानुबंधकृतमनेकाल्त्वमित्यत्रानुबंधपदस्य तत्वयोग्यपरत्वेऽनेकाल्शिदित्यत्र शित्पदस्य शित्त्वयोग्यपरत्वेन फलं प्रत्युतं गौ
रवं॥ किंचेत्संज्ञायोग्यशकारवत्वज्ञाने सर्वादेशत्वज्ञानं सर्वादेशत्वज्ञाने च प्रत्ययादित्वज्ञानं ततश्च शकारस्येत्संज्ञायोग्यत्वज्ञा
नमिति चक्रकापत्तिः॥ काणोस्तूक्तरीत्या प्रवृत्तिकालेनुबंधत्वज्ञानं सुलभं॥ केचित्तु नानुबंधकृतमसारूप्यमित्यस्य वासरूपपरि
भाषापवादतयोपसंजातनिमित्तोप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यत इति न धातुलोप इति सूत्रस्य कौस्तुभोक्तन्याये
न तेन तस्य बाधः॥ प्रकृते तु प्रथमत एवानेकाल्त्वात्सर्वादेशस्यापवादस्य निमित्तमस्तीत्युक्तन्यायस्याप्रवृत्तेर्विशेष इत्याहुः॥ अने
काल्शित्सर्वस्येति सूत्रस्थं शित्सर्वस्येति किमुदाहरणं॥ इदम इश्॥ नैतदस्ति॥ शित्करणादेव सर्वादेशो भविष्यति॥ इदं तर्हि जश्शसोः

कि० शिःजसःशीतिभाष्यं॥लुटःप्रथमस्येतिसूत्रस्थंडाविकारस्यशित्करणंसर्वादेशार्थंडाविकारःशित्कर्तव्यःकिंप्रयोजनंसर्वादेशार्थमि
७३ तिभाष्यंचशिदनुबंधपदेशित्वानुबंधत्वयोग्यपरमित्युपेत्यकृत्वाचिंतान्यायेनप्रवृत्तमित्यंत्यस्यायंस्थानेभवन्नप्रत्ययस्यासत्वात्प्र
त्ययसंज्ञायामित्संज्ञानस्यादसत्यामित्संज्ञायांलोपोनस्यादसतिलोपोऽनेकाल्यदाऽनेकाल्तदासर्वादेशोयदासर्वादेशस्तदाप्रत्य
योयदाप्रत्ययस्तदेत्संज्ञायदेत्संज्ञातदालोपइतितदुत्तरभाष्येणतथात्वंसूचितमितिनतद्विरोधः॥विभक्तियोग्यइति॥ननूपसं
जनिष्यमाणनिमित्तन्यायेनसिद्धेविभक्तित्वयोग्येलक्षणाश्रयणंव्यर्थमितिचेन्न॥नबहुव्रीहावितिसूत्रस्थभाष्यप्रामाण्येननिषे
धविषयेसंज्ञाविषयेवोपसंजनिष्यमाणन्यायाप्रवृत्तेः॥तत्रहित्वकत्पितृकइत्यादावलौकिकेप्रक्रियावाक्येप्राप्ताकज्कारणा
यबहुव्रीहिपदंलक्षणयाबहुव्रीह्यर्थालौकिकप्रक्रियावाक्यपरमित्युक्तं॥उक्तन्यायेनैवपूर्वंसर्वनामसंज्ञायास्तन्निमित्ताकचश्चा
प्रवृत्तिसिद्धौलक्षणाश्रयणवैयर्थ्यंस्पष्टमेवाप्रातिपदिकस्यैवप्रकृतित्वादिति॥अकज्विधौसर्वनामपदंतत्प्रकृतिकसुबंतेन
लाक्षणिकंनेदमदसोरकोरककारकत्वाव्यभिचारात्॥ननुसमस्तार्थमेतत्स्यादितिचेत्सत्यं॥काकचोरविशेषप्रतिपादनपरभाष्या
देवोक्तार्थस्वीकारात्॥अन्यत्रतुलाक्षणिकमेवेत्युक्तम्॥ङ्याप्प्रातिपदिकादितिसूत्रे॥अकज्विधौप्रातिपदिकाधिकारस्यनो

पयोगः॥तस्यपंचम्यंतत्वात्॥ तत्रसर्वनामपदेनलिंगविशिष्टपरिभाषयाऽव्ययंतस्यापिग्रहणाद्भवतीशब्देङीपः प्राक्अकचिभव
तकीतिरूपं॥ नचप्रत्ययःपरः प्रयोक्तव्यएवेतिनियमेनमध्येकजनुत्पत्तिः॥त्वयकेत्यादाविवप्रकृतिप्रत्ययमध्येप्यकच्प्रवृत्ति
संभवात्। [illegible]न्यादिविधानेनोक्तनियमस्यानित्यत्वकल्पनात्।सुबंतात्परेतिसुबंतत्वज्ञानाव्यवहितोत्तरकालप्रवृत्तिकइत्यर्थः॥प्रत्ययांतरत्वे
नव्याख्यानादिति॥अस्यात्पंतस्वार्थिकायज्विधानार्थमित्यनेनान्वयः॥महाविभाषासंबंधस्यावश्यकत्वेनेति॥अस्यलक्ष्यानु
रोधादितिशेषः॥अतएवेति॥सुबुत्पत्तेःपूर्वमयजुत्पत्तेरेवेत्यर्थः॥ननुसुबुत्पत्त्यनंतरमयजुत्पत्तावप्युभशब्दात्सुबंतात्स्वार्थेऽय
चितत:सप्तम्यांततस्त्रल्युभयत्रेतिरूपंसिध्यति॥नहिअवयवार्थकायजंतस्योभयशब्दस्यसर्वादिषुपाठःनस्वार्थिकायजंतस्ये
त्यत्रमानमस्तीतिचेन्न॥सुबुत्पत्त्यनंतरमयजुत्पत्तौनित्यमित्यत्रोभादित्यस्यसंबंधेनतस्यतत्प्रकृतिकसुबंतेलक्षणायांमानाभा
वेनसुपिपरतःभशब्दादयचितस्यसप्तमीरूपस्यसुपउभशब्दप्रकृतिकस्यसर्वनामप्रकृतिकत्वाभावेनत्रलाद्यनापत्तिरित्यस्या.या
त्॥घकालतनेष्विति ज्ञापकंतुसार्थकतद्धितविषयंनचोभशब्दपाठस्यत्रलाद्युत्पत्तिरपिप्रयोजनमस्त्विति वाच्यं॥तथासत्युभ
स्यसर्वनामत्वेकिंप्रयोजनमकजर्थंपाठःक्रियतेउभकौकिमुच्यतेऽकजर्थमिति॥नपुनरन्यान्यपिसर्वनामकार्याणि॥अन्याभावो

वि० द्विवचनटाविषयत्वादित्यादिभाष्यग्रंथसंदर्भसूचितप्रयोजनांतराभावाभिप्रायविरोधात् ॥आद्युदात्तएवेति॥नांतोदात्तःचित्वेनांतो
७४ दात्तस्य प्राप्तत्वेनोदात्तग्रहणवैयर्थ्यात्॥ननुकइदानीमन्यस्मैन्यत्रभवतिउभयोऽन्यत्रोभयशब्दोऽस्यान्यत्रभवतिइतिभाष्यं॥अस्यो
भशब्दस्यान्यत्रद्विवचनभिन्नेपरतउभयइतिरूपंभवति॥अयज्भवतीतिफलितोर्थः॥तथाचायच्प्रत्ययस्यद्विवचनभिन्नेपर
तएवविधानेनसुबुत्पत्तेःपूर्वमेवायजितिपूर्वग्रंथासंगतिः॥भाष्यसूचिताकजतिरिक्तसर्वनामकार्याभावविरोधश्च उभयत्रे
त्यादावुभशब्दात्सप्तमीद्विवचनोत्तरमेवत्रलुत्पत्याद्विवचनेचसतिअयजभावेनसर्वनामप्रकृतिकसप्तम्यंताभावेनत्रलनाप
त्यातदर्थंउभशब्दपाठस्यावस्यकत्वादित्याशंक्याह॥द्विवचनविषयत्वाभावसंभावनेति॥परिनिष्ठितेप्रयोगेइतिशेषः॥तथा
चान्यत्रेत्यस्यद्विवचनपरत्वाभावेइतिनार्थःकिंतुपरिनिष्ठितेप्रयोगेद्विवचनविषयत्वाभावसंभावनायामित्येवार्थइतिनपूर्वो
क्तदोषद्वयमितिभावः॥नन्वेवमप्युभावित्यत्राप्ययच्स्यात्॥अयचितितोद्विवचनेपिपरिनिष्ठितेप्रयोगेउभशब्दस्यद्विवचन
परत्वाभावात्॥अयचाव्यवधानादित्यतआह॥उभयशब्दस्यवेति॥वस्तुतोयमार्थिकोऽर्थोनतुवाच्योऽर्थःअन्यत्रेत्यस्यप्रकृतद्वि
वचनभिन्नेएवशक्तत्वेनततोद्विवचनपरत्वाभावइत्यर्थलाभात्॥अस्येत्यस्योभयशब्दस्येत्यर्थेकइदानीमस्यान्यत्रभवतीत्यादि

भाष्यग्रंथस्यानन्वितार्थत्वापत्तेश्च भाष्यास्वरार्थस्त्वस्योभशब्दस्यपरिनिष्ठितेप्रयोगेद्विवचनभिन्नपरत्वेउभयइतिरूपंबोध्य
मिति॥अत्रैरनेकाचइतिसूत्रस्यगतिकारकपूर्वस्येष्यतइत्यस्येवार्थिकार्थे एवतात्पर्येनवाच्येर्थे॥ननुयत्रद्विवचनविषयत्वाभा
वसंभावनातत्रैवायजितिनियमोव्यर्थः॥उभावित्यादौवृत्तेरभावेनवृत्तिविषयेविहितस्यायचोऽप्रवृत्तेः॥अकजंतात्तुनायच्॥अ
नभिधानादित्युक्तमेवेत्याशंक्यतत्फलमाह॥उभयोर्वासइति॥नन्वेवंसतिवृत्तिविषयइतिव्यर्थं॥उभावित्यादौद्विचनपरत्वादे
वायचोऽप्रवृत्तेरितिचेत्सत्यं॥एतत्फलितार्थकथनमेववृत्तिविषयइति॥एवंचान्यत्रेत्यस्योभावित्यपिप्रत्युदाहरणंदातुंशक्यं
तत्परत्वविषयाभावेइति॥परिनिष्ठितेप्रयोगेतत्परत्वाभावसंभावनायामित्यर्थः॥यथाश्रुतमूलंतुनयुक्तं॥द्विवचनपरत्वाभाव
इत्युक्तौसंप्रतिद्विवचनपरत्वाभावाभावेनोभयत्रेत्यादावयजनापत्तेः॥नचांतरंगत्वाद्विभक्त्युत्पत्तेःपूर्वमयजापत्यातद्वैयर्थ्या
पत्तेः॥इत्यादौतुनेति॥अत्यंतस्वार्थिकायजितिशेषः॥निर्देशेनेति॥इदमुपलक्षणम्॥अत्यंतस्वार्थिकायचोंऽतरंगत्वेसुबुत्पत्तेः
पूर्वमेवोत्पत्तेःस्वीकारेणावयवार्थकायचःपूर्वंस्वार्थिकायच्युभशब्दस्यप्रकृतिकसुबंताभावेनोभादुदात्तइत्यस्यावयवार्थकाय
च्विधायकस्यनिर्विषयत्वापत्तेः॥अनभिधानमेववेति॥अत्रप्रमाणंतुकप्रत्ययस्यद्विवचनत्वमाश्रित्योभशब्दप्रत्यास्यानपरभा

वि॰ र्थ्यं॥तथाहि॥द्विवचनशब्दस्यतत्संज्ञकपरत्वेरूपप्ययच्भवति॥द्वित्वविशिष्टार्थवाचकपरत्वेतुसनेतिफलभेदादनभिधा
७५ नं॥ननूभशब्दपाठोमास्तु॥नचकप्रत्ययापत्तिः॥वृत्तिविषयेसुबुत्पत्तेः पूर्वमेवायज्जुत्पत्तिस्वीकारेणकप्रत्ययस्यचसुबुत्पत्यनंतर
मेवोत्पत्यापूर्वमयच्यजंतस्यसर्वादिषुपाठेनततोऽकचएवप्रवृत्तेः॥नचायजंतस्यसर्वनामत्वेप्युभशब्दस्यसर्वनामत्वात्ततः
कप्रत्ययापत्तिरितिवाच्यं॥सुबुत्पत्तेः पूर्वमेवायज्जुत्पत्तिस्वीकारेणोभशब्दस्यासुबंतत्वेपिनततः कप्रत्ययप्राप्तिः॥प्रत्ययःपरःप्र
योक्तव्यएवेतिनियमेनोभशब्दायचोर्मध्येकप्रत्ययासंभवाच्चेत्याशंक्याह॥अयचोपीति॥कुतोनवाच्यइत्यतः॥तत्रहेतुमाह॥उपजी
व्यत्वेनेति॥परिनिष्ठितेप्रयोगेद्विवचनपरत्वाभावोहिअयज्जुपजीव्यः॥यदिचायचिकृतेऽकच्स्यात्तदास्वार्थिकायजंतस्यद्वित्ववि
शिष्टबोधकत्वेनततोद्विवचनापत्तौद्विवचनपरत्वाभावमुपजीव्यंव्याहन्येतेतिकप्रत्ययस्यैवप्राप्तिरित्यर्थः॥नन्वपवादेऽयचिजाग
रूकेकथंकइत्याशंक्याह॥अपवादस्त्वन्यत्रेति॥उपजीव्योपजीवकभावादन्यत्रेत्यर्थः॥तथाचद्विवचनपरत्वाभावसंपादनद्वारा
स्वोपजीव्यकप्रत्ययविघातकाकचोऽयच्ननिमित्तंभवतीतिनात्राकच्प्रवर्ततइत्यर्थः॥अतएवोपसर्जनव्यावृत्तिरिति॥इदमुप
लक्षणं॥वृत्युत्तरमुपसर्जनेकुत्सादियोगासंभवात्॥ततःपूर्वतद्योगेत्वकजिष्टएवेति॥अज्ञाताद्यर्थविशिष्टस्वार्थेइति॥सुबंतात्क

प्रत्ययविधानेप्यभिधानेप्यभिधानस्वाभाव्यात्सूत्रेविभक्तिविशेषस्यानुपादानाच्च ।अज्ञातत्वादिविशिष्टप्रातिपदिकार्थेए वकप्रत्ययइतिभावः॥परे त्वित्यादि॥निषेधाश्चबलीयांसइति॥ननुस्वरतेर्वेट्त्वाद्दत्थनोःस्येइतिविप्रतिषेधेनेति विप्रतिषेधानुपपत्तिः॥उक्तन्यायेनविकल्पस्यबलवत्वादितिचेन्न॥ऋत्थनोःस्येइत्यस्यनिषेधबाधकत्वेननिषेधसमकक्षत्वात्॥नचैवमप्याकडारादन्यत्रसंज्ञायाबाध्यबाधकभावाभावादिदमयुक्तमितिवाच्यं॥विजातीययोस्तदभावेपिसजातीययोस्तदंगीकारात्॥नित्यविकल्पयोःसंज्ञयोरेकसंज्ञाधिकारबहिर्भूतयोरपितदंगीकाराद्वा॥भावाभावयोर्विरोधेनतयोःसाक्षाद्विरोधात्॥साक्षादविरुद्धयोरेवैकसंज्ञाधिकारबहिर्भूतयोस्तयोर्बाध्यबाधकभावाभावः॥साक्षाद्विरुद्धयोस्तुल्ययोःसास्त्येव॥यथातपरःतत्कालस्याणुदित्सवर्णस्येत्यनयोः॥अतएवपूर्वादीनांवैकल्पिकीसर्वनामसंज्ञांनित्यसंज्ञाबाधते॥नन्वेवंपूर्वेइत्यादौशीभावोत्तरंनस्यात्॥पूर्वपरेत्यादिनाजसिपरतःसर्वनामसंज्ञाविकल्पविधानेनजसःसर्वनाम्नोविहितत्वाभावादित्याशंक्याह॥पूर्वपरेत्यादित्विति॥तथाचपूर्वेइत्यादौजसःपूर्वप्रवर्तमानांसर्वादीनीत्येतद्विहितांसर्वनामसंज्ञामुपजीव्य शीभावप्रवृत्तिरितिभावः॥नन्वसिद्धंबहिरंगमित्यनेनांतरंगोत्तरंप्रवर्त्तमानबहिरंगस्यासिद्धत्वेनाभावबोधनान्नदोषइत्याशंक्यसमाधत्ते॥असिद्धमिति॥नन्वंतरंगप्रवृत्युत्तरंप्रवृत्तिनिमित्तसद्भावाधीन

बहिरंगप्रवृत्तेरंतरंगपरिभाषयानिवारणाभावेपिबहिरंगावैकल्पिकीसर्वनामसंज्ञाऽसंभवादेवनप्रवर्त्तेते॥नहिनित्यसंज्ञोत्तरंप्रवर्त्त्य
मानमपिपूर्वपरेतिशास्त्रंसर्वनामसंज्ञायाअभावंबोधयितुंक्षमं॥भावाभावयोर्विरोधात्॥विधायकशास्त्रभेदेनसंज्ञाभेदेतुपूर्वपरेत्यादि
शास्त्रविहितसंज्ञायाअभावबोधनेपिसर्वादीनीत्येतद्विहितायाअभावाबोधनात्॥तामाश्रित्यनित्यंशीभावोदुर्वारइत्याशंक्याह॥त
दुत्तरमपीति॥शास्त्रभेदेनसंज्ञायाभेदाभावेपिजातसंज्ञायाएवपूर्वादिष्विवोभयोरपिअभावबोधनंसंभवति॥लुगादिनेवजातनि
वृत्तेरंगीकारादितिभावः॥ननुप्रथमचरमेत्यादौजसीतिविषयसप्तमीतथाचांतरंगबहिरंगयोर्युगपत्प्राप्त्यांऽतरंगबलीयइत्यस्यात्र
विषयोस्त्येवेत्याशंक्याह॥जसीति॥तदुत्तरमेतद्विषयादिति॥तथाचप्रातिपदिकसंज्ञोत्तरमेवशीभावविषयसत्वेनतदुत्तरमेववै
कल्पिकीसर्वनामसंज्ञानित्यसर्वनामसंज्ञातुप्रातिपदिकसंज्ञासमकालमेवेतिनतयोर्युगपत्प्राप्तिरितिभावः॥आनुमानिक्यानये
ति॥अंतरंगंबलीयइत्यनयाऽसिद्धंबहिरंगमित्यनयावेत्यर्थः॥नन्वास्तेयथोद्देशेनित्यपाक्षिकयोर्युगपत्प्राप्त्यभावः॥ततएवचांतरंगं
बलीयइत्यस्याप्रवृत्तिश्च तथापिकार्यकालपक्षेस्त्येवतयोर्युगपत्प्राप्तिः॥शीभावप्रवृत्तिकालएवनित्यसंज्ञाप्रवृत्ते रित्याशंक्याह
सर्वनामसंज्ञायामिति॥उक्तयुक्त्येति॥सर्वनाम्नोविहितत्वेनशीभावसिद्धिरित्युक्तयुक्त्येत्यर्थः॥यद्यपिकथंचिद्युगपत्प्रवृत्तिंगृ

ह्रीत्वांऽतरंगबलीयइतिनित्यसंज्ञाप्रवृत्तावपितदुत्तरबहिरंगइतिपूर्वशेखरोक्तयुक्त्यासूपपाद्य॥अन्यथांतरंगबलवदित्यस्यविष
याभावेपिप्रातिपदिकसंज्ञासमकालमेवसर्वनामसंज्ञांगीकारात्तन्निवृत्तिर्नस्यात्॥तथाप्यंतरंगबलवदितिन्यायेनबाधितस्यपुनरप्र
वृत्तिरित्यभिप्रायेणेदं॥अतएवेति॥उक्तयुक्त्यानित्यसंज्ञायाःवैकल्पिकसंज्ञायाबाधायोगादेवेत्यर्थः॥नातिप्रसंगइति॥नषट्स्वस्रादि
भ्यइतिनिषेधोपिबोध्यः॥नन्वेवंप्रत्याहाराश्रयणेटिड्ढेतिसूत्रेतयप्ग्रहणंव्यर्थमित्याशंक्याह॥तयप्ग्रहणंत्विति।अवयुत्यावयवेनै
कदेशेन॥अवयुत्येतिल्यबंतंवेति॥अवयुत्यानुवादइतिपाठेत्ववयुतेःप्रत्याहारैकदेशस्यानुवादइतिषष्ठीसमासः॥ननुस्यानिवदित्य
तिदेशप्रापितायानिरवकाशत्वाच्चेत्ययुक्तं॥द्वयेइत्यादौसावकाशत्वाच्चेत्याशंक्याह॥अनभिधानमेवेति॥वस्तुतोनेदंयुक्तं॥अनभि
धानेप्रमाणाभावात्॥धातोश्चद्वयेप्रत्ययास्तिङःकृतश्चेतिभाष्यप्रयोगाच्च॥अन्येतुसर्वनामसंज्ञायांकार्यकालपक्षएवतत्पक्षेचसंज्ञा
याःकार्यनिमित्तनिमित्तिकत्वं॥अतएवपूर्वपरेत्यादिचरितार्थं॥अन्यथापूर्वनित्यसर्वनामसंज्ञायांततएवनित्यंशीभावाप्रवृत्तौतद्द्वैय
र्थ्यं॥नचास्मिन्पक्षेसर्वनाम्नोविहितत्वाभावेनोभयेइत्यादौशीभावानापत्तिः॥विहितविशेषणतायाश्रयणात्॥अदंतात्सर्वनाम्नःपर
स्यप्रत्यासत्यातत्पर्याप्तांगसंज्ञानिमित्तस्यजसःशीत्यादिरूपेणवाक्यार्थबोधांगीकारेणविहितविशेषणफलसिद्धेः॥नांतरंगबलीयइ

हासंज्ञाकरणानुपयोगात्॥एकपदोपस्थाप्ययोरिति॥यत्तुपरेषांकृतीष्टसाधनत्वयोर्लिङुपस्थाप्ययोःपरस्परान्वयस्यदृष्टत्वात्सं
तोःपृथक्फलव्यापारोशक्योचेत्तयोरुद्देश्यविधेयभावेनान्वयापत्तिः॥पृथगुपस्थितयोस्तयोस्तथान्वयस्यौत्सर्गिकत्वादिति मं
जूषायांफलव्यापारयोःपृथक्शक्तिवादस्यस्वयमपिदूषितत्वाच्चिंत्यमेतदितिपाठकेनोक्तंतन्न॥कृतीष्टसाधनत्वयोर्लिङ्त्वा
व्यातत्वादिशक्ततावच्छेदकभेदेनशाब्दबोधविषययोस्तथान्वयांगीकारेपीतरत्रतथान्वयेमानाभावात्॥मंजूषाग्रंथस्तुपृथगुप
स्थितयोस्तथान्वयस्यौत्सर्गिकत्वादेकपदोपस्थाप्ययोरन्वयांगीकारएवमन्वयःस्यादित्येवंपरः॥अतएववषट्कर्त्तुःप्रथमभक्ष
इत्यादौभक्षप्राथम्ययोर्नोद्देश्यविधेयभावेनान्वयः॥यद्यप्येवकारार्थयोरन्ययोगव्यवच्छेदयोःपरस्परमन्वयोस्ति॥तथापिनोद्देश्य
विधेयभावेनसः॥अगतिकगतिश्चेतिनदोषः॥निपातातिरिक्तनामपदोपस्थाप्ययोस्तथान्वयांगीकाराद्वा॥अन्यतरवियोगेनेति।य
त्तुअरिमेदःपलाशश्चबाहुःकल्पद्रुमश्चतेइतिपदश्लेषोदाहरणेऽरीणांमेदःपलंचाश्नातीत्यरिमेदःपलाशसोबाहुररिमेदसंज्ञ
कःपलाशसंज्ञकश्चकल्पद्रुमइत्यर्थकेपरस्परमुद्देश्यविधेयभावेनान्यतरवियोगेनान्यत्रान्वयस्यदृष्टत्वादिदंचिंत्यमतएवदुष्ट
पदंश्रुतिकटुच्युतसंस्कृतीतिपददोषविशेषलक्षणसूत्रे॥ननुश्रुतिकटुप्रभृतिशब्दानांलक्षणपरत्वेविभागपरत्वाभावाल्लक्ष्या

वि॰ था चात्र सूत्रकृद्भाष्यकृन्मते विरुद्धे एव॥ उत्तरमुनिस्मृतिश्च प्रबलेत्येव तत्त्वं॥ विभाषा दिगिति सूत्रस्य भाष्यत्वेकदेशयुक्तिरित्याहुः॥ न
७९ नु सर्वार्थवाचकत्वं सर्वविश्वयोरेव न त्वन्येषामपीत्यत आह॥ प्रसिद्धस्वीयेति॥ तथा च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नध
र्माश्रयवाचकत्वं सर्वार्थवाचकत्वं॥ मानाभाव इति॥ तेन त्यदादीनीत्येकशेषोपि संज्ञोपसर्जनयोर्न॥ त्यदादीनि चेति वृत्त्य संज्ञापि न॥ ना
मपदस्वारस्येनेति॥ घटपदं घटत्वस्य नामेत्यप्रयोगादिति भावः। पूर्वादिसंग्रहायेति॥ ननु दिग्वाचकपूर्वादीनां न स्वप्रवृत्तिनिमित्त
समानाधिकरणकृत्स्नधर्माश्रयवाचकत्वमिति चेन्न॥ सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति प्रमाणानुरोधेन तत्तद्वर्षवासिनां सू
र्योदयाधिकरणत्वेन परिदृश्यमानभागविशेषाणामेव तत्तद्देशवासिनः प्रति पूर्वादिकत्वांगीकारेण सर्वार्थवाचकत्वोपपत्तेः॥ ननु
द्वयोस्त्रिषु वा संकेतितसर्वादीनां सर्वनामसंज्ञा दुर्वारा सर्वार्थवाचकत्वादित्याशंक्याह। संज्ञाव्यावर्त्तयेद् इति॥ अभिव्यक्त्येति न्यायमूलके
ति॥ नन्वस्य न्यायस्य यत्तदिति चेत्सत्यं॥ अभिव्यक्तेति न्यायस्य पदकार्यविषयकत्वमन्यत्रोक्तं तु हेयमेव॥ तथा चायं न्यायः प्राति
पदिककार्यविषयेपि॥ अत एव संज्ञा त्रिशब्दे त्रयादेशाभावः॥ युष्मदस्मद्भ्यां ङसोऽशित्यादेरात्वाद्यभावश्च अयं निर्देशः प्रातिप
दिककार्येप्येतत्प्रवृत्तेर्लिंगं॥ सर्वनामपदवत्त्वांश एवेति॥ इतरांशस्तु योगार्थानुगुणानामेव संज्ञित्वसूचनायेति भावः॥ अन्यथा म

वि॰ द्रेंऽतरं पश्यति ॥ आत्मीयेंऽतरे जनाः ॥ विनार्थे उदाहरणं मृग्यं ॥ बहिरर्थे अंतरे चंडालगृहाः ॥ अवसरेंऽतरज्ञः सेवकः ॥ मध्येऽनयोरं
७८ तरे शैलाः ॥ अंतरात्मनि ॥ अन्योंतरआत्माऽनंदमयः ॥ चकारात्सदृशार्थोपि ॥ यथास्थानेंतरतमः ॥ विनाबहिःशब्दयोरव्ययत्वेपिचार्थ
योगमाश्रित्यद्वंद्वः ॥ नत्वकजाद्युदात्तत्वादाविति ॥ अकजाद्युदात्तत्वेतुनित्यंस्तः ॥ तयोः कर्तव्ययोः सतोः सर्वादी नीतिनित्यसं
ज्ञासत्वात् ॥ सातुशीभावोपयोगिनी ॥ शीभावेविकल्पविधानसामर्थ्यात् ॥ वर्णाश्रमेतरे इत्यादौतुनैते ॥ द्वंद्वे चेतिनित्यसंज्ञानिषे
धात् ॥ विकल्पस्यचशीभावमात्रफलकत्वात् ॥ एवंप्रथमे इत्यादावपिनते ॥ बोधकत्वरूपेति ॥ लोकेइतिशेषः ॥ वस्तुतस्त्वेकार्थी
भावकल्पनातः पूर्वमेवाकचः प्राप्तिर्बोध्या ॥ अंतरंगानपीतिन्यायस्तुसंज्ञातिरिक्तांतरंगबाधकत्वविषयः ॥ अर्थातिरिक्तनिमि
त्तविनाशकविषयोवा ॥ ननुसचसमासेपिश्रूयेतेत्यस्याति भवकानित्येवदृष्टांततयाप्रदर्शनीयः ॥ अतिक्रांतइत्यादिकंतुनप्रदर्शनी
यं ॥ प्रकृतासंगतेरित्याशंक्याह ॥ अतिक्रांतइत्यादीति ॥ तथाचातिक्रांतोभवकंतमितिलौकिकविग्रहवाक्यइवालौकिकेप्रक्रिया
वाक्येप्रवर्तमानोऽकच्यथातिभवकानितिसमासेश्रूयतेतथात्वकंपितेतिलौकिकविग्रहवाक्यइवालौकिकेवाक्येप्रवर्तमानोऽक
च्त्वत्कपितृकइतिसमासेपिश्रूयेतेतिमूलार्थइतिभावः ॥ प्रत्यंगमंतरंगं ॥ एतच्चेति ॥ भाष्यकृत्करिष्यमाणसूत्रप्रत्याख्यानस्यसू

त्रकृदभिमतत्वमित्यर्थः भाष्येध्वनितमिति एवंहितत्रभाष्यं॥ क्वापमकारः श्रूयतेनक्वचिच्छ्रूयतेलोपोस्यभवति॥ यदिनक्वचिच्छ्रू
यतेकिमर्थमिदमुच्यतेनलोपएवोच्यते॥ नैवंशक्यंलोपेसतिगुणःप्रवर्तेत॥ अत्वेचनसतिअकारलोपस्यस्थानिवद्भावाद्गुणोनभ
विष्यति॥ ननुचलोपेपिनधात्वितिनिषेधोभविष्यति॥ आर्धधातुकनिमित्तेलोपेप्रतिषेधः॥ नचैषआर्धधातुकनिमित्तोलोपः॥ अपि
चप्रत्याख्यायतेखल्वपिसयोगः॥ तस्मिन्प्रत्याख्यातेगुणःस्यादेवेति॥ एवंचप्रत्याख्यानविरुद्धफलकसूत्राशयकल्पनंवृत्तिकाराणा
मनुचितमितिसूचितंतदाह॥ एवंचेति॥ कैयटेस्पष्टमिति॥ नन्वेवंसूत्रमतेतिसर्वायेत्यादौस्मैप्रसंगः॥ बहुव्रीहिग्रहणस्योपसर्जनोप
लक्षणत्वात्॥ संज्ञायांतुव्यवस्थायामसंज्ञायामितिपृथक्कृत्यनिषेधोबोध्यः॥ अंतर्गणकार्यमप्यनुपसर्जनादित्यस्याकाराकारावनु
पसर्जनस्यद्वंद्वेष्टव्यावित्यर्थेनपरिहर्त्तव्यं॥ सत्वमप्यर्थाधिकाराश्रयणेनपरिहर्त्तव्यं॥ अन्येतुप्रियविप्रिविश्वायोपसर्जनप्रतिषेधेनाप्ये
तत्सिद्धमितिनबहुव्रीहावितिसूत्रस्यभाष्येणनकोपधायाइत्ययंयोगः पुंवद्भावमात्रस्यविषयेततउत्तरमाद्यस्ययोगस्यविषयइति
नकोपधायाइतिसूत्रस्यभाष्येणसूत्रेष्वेवहितत्सर्वंयद्वृत्तौयच्चवार्तिकेइत्यभियुक्तोक्त्याचसंज्ञोपसर्जनप्रतिषेधोपिसूत्रकृत्संमतए
व॥ अतएवबहुव्रीहिपदस्यतदर्थालौकिकवाक्यपरत्वंलक्षणयास्वीकृत्यत्वत्कपितृकइत्यादावकजभावःफलमित्युक्तंभाष्ये॥ त

कि० थाचात्र सूत्रकृद्भाष्यकृन्मते विरुध्येते एव॥ उत्तरमुनिस्मृतिश्च प्रबलेत्येव तत्त्वं॥ विभाषादिगिति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरित्याहुः।न
७९ नु सर्वार्थवाचकत्वं सर्वविश्वयोरेव न त्वन्येषामपीत्यत आह॥ प्रसिद्धस्वीयेति॥ तथा च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नध
र्माश्रयवाचकत्वं सर्वार्थवाचकत्वं॥ मानाभाव इति॥ तेन त्यदादीनीत्येकशेषोपि संज्ञोपसर्जनयोर्न॥ त्यदादीनि चेति वृत्तस्य संज्ञापि न।ना
मपदस्वारस्येनेति॥ घटपदं घटत्वस्य नामेत्यप्रयोगादिति भावः।पूर्वादिसंग्रहायेति॥ ननु दिग्वाचकपूर्वादीनां न स्वप्रवृत्तिनिमित्त
समानाधिकरणकृत्स्नधर्माश्रयवाचकत्वमिति चेन्न॥ सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति प्रमाणानुरोधेन तत्तद्वर्षवासिनां सू
र्योदयाधिकरणत्वेन परिदृश्यमानभागविशेषाणामेव तत्तद्देशवासिनः प्रतिपूर्वादिकत्वांगीकारेण सर्वार्थवाचकत्वोपपत्तेः॥ ननु
द्वयोस्त्रिषु वा संकेतितसर्वादीनां सर्वनामसंज्ञा दुर्वारा सर्वार्थवाचकत्वादित्याशंक्याह।संज्ञाव्यावर्त्तयेइति॥ अभिव्यक्त्येति न्यायमूलके
ति॥ नन्वस्य न्यायस्य यत्तदिति चेत्सत्यं॥ अभिव्यक्तेति न्यायस्य पदकार्यविषयकत्वमन्यत्रोक्तं तु हेयमेव॥ तथा चायं न्यायः प्राति
पदिककार्यविषयेपि॥ अत एव संज्ञा त्रिशब्दे त्रयादेशाभावः॥ युष्मदस्मद्भ्यां ङसोशित्यादौ आत्वाद्यभावश्च अयं निर्देशः प्रातिप
दिककार्येप्येतत्प्रवृत्तेर्लिंगं॥ सर्वनामपदवत्त्वांश एवेति॥ इतरांशस्तु योगार्थानुगुणानामेव संज्ञित्वसूचनायेति भावः॥ अन्यथा म

हासंज्ञाकरणानुपयोगात्॥ एकपदोपस्थाप्ययोरिति॥ यत्तुपरेषांकृतीष्टसाधनत्वयोर्लिङुपस्थाप्ययोः परस्परान्वयस्यदृष्टत्वात्था
तोः पृथक्फलव्यापारोशक्यौचेत्तयोरुद्देश्यविधेयभावेनान्वयापत्तिः॥ पृथगुपस्थितयोस्तयोस्तथान्वयस्यौत्सर्गिकत्वादिति मं
जूषायांफलव्यापारयोः पृथक्शक्तिवादस्यस्वयमपिदूषितत्वाच्चिंत्यमेतदितिपाठकेनोक्तंतन्न॥ कृतीष्टसाधनत्वयोर्लिङत्वा
व्याप्तत्वादिशक्तताव च्छेदकभेदेनशाब्दबोधविषययोस्तथान्वयांगीकारेपीतरत्रतथान्वयेमानाभावात्॥ मंजूषाग्रंथस्तुपृथगुप
स्थितयोस्तथान्वयस्यौत्सर्गिकत्वादेकपदोपस्थाप्ययोरन्वयांगीकारएवमन्वयःस्यादित्येवंपरः॥ अतएववषट्कर्तुः प्रथमभक्ष
इत्यादौभक्षप्राथम्ययोर्नोद्देश्यविधेयभावेनान्वयः॥ यद्यप्येवकारार्थयोरन्ययोगव्यवच्छेदयोः परस्परमन्वयोस्ति॥ तथापिनोद्देश्य
विधेयभावेनसः॥ अगतिकगतिश्चेतिनदोषः॥ निपातातिरिक्तनामपदोपस्थाप्ययोस्तथान्वयांगीकाराद्वा॥ अन्यतरवियोगेनेति॥ य
त्तुअरिमेदः पलाशश्चबाहुःकल्पद्रुमश्चतेइतिपदश्लेषोदाहरणेऽरीणांमेदःपलंचाश्नाती त्यरिमेदः पलाशसोबाहुररिमेदसंज्ञ
कः पलाशसंज्ञकश्चकल्पद्रुमइत्यर्थकेपरस्परमुद्देश्यविधेयभावेनान्यतरवियोगेनान्यत्रान्वयस्यदृष्टत्वादिदंचिंत्यमतंएवदुष्ट
पदंश्रुतिकटुच्युतसंस्कृतीतिपददोषविशेषलक्षणसूत्रे॥ ननुश्रुतिकटुप्रभृतिशब्दानांलक्षणपरत्वेविभागपरत्वाभावाल्लक्ष्या

वि० नुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इत्याशंक्य रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरपि प्रत्ययः॥ यथा घ्राणरस
८० नचक्षुस्त्वक्श्रोत्राणींद्रियाणि भूतेभ्य इति गौतमीयेंद्रियलक्षणसूत्रे इति काव्यप्रदीपकृता व्याख्यातमिति पाठकेनोक्तं तन्न॥
अरिमेदपलाशशब्दो हि योगरूढो मंडपादिशब्दवत्॥ न तु योगरूढौ रूढौ वृक्षयोर्मेदः पलानशितृत्वात्॥ स सर्वनामशब्दस्तु योगरू
ढः॥ योगरूढस्थले च शेखरोक्तो नियम इति नोक्तश्लेषोदाहरणविरोधः॥ काव्यप्रदीपकृदुक्तिस्तूक्तनियमविरोधेन प्रौढिवाद
रूप इति दिक्॥ ननु सर्वनामपदस्य योगरूढत्वेन तदनुगुणानामेव संज्ञित्वकल्पनात्॥ न तूपसर्जनादीनां सर्वादीनां गणाद्बहिर्भाव
स्तथा चातिसर्वायेत्यादौ समुदायस्य संज्ञा दुर्वारा॥ तस्य प्राधान्येन स्वीयप्रवृत्तिनिमित्तवत्सर्वोपस्थापकत्वादित्याशंक्याह॥ तदं
तत्वे इति॥ अवयवद्वारेति॥ व्याख्यानादंतावयवद्वारोक्तसर्वार्थवाचकानामेव संज्ञित्वकल्पनायामुपसर्जनस्य सर्वादिबहिर्भाव
अर्थादापत्तितः॥ योगार्थाननुगुणत्वेन तस्य तत्त्वे मानाभावादिति भावः॥ येन विधिरिति सूत्रे कैयटेनोक्तं पक्षं दूषयति॥ एतेनेति॥
आक्षेपं विनैवोक्तरीत्या निर्वाहसंभवेनेत्यर्थः॥ इतौ लघुरिति॥ वस्तुतः प्राप्ताप्राप्तविवेकन्यायाद्यनुसंधानादाद्यपक्षोऽप्येतत्पक्षस
म एव॥ इतरविशेषणत्वेनार्थोपस्थापकत्वमिति॥ तेषां घन इत्यादौ तु तच्छब्दस्येतरविशेषणतया स्वार्थबोधकत्वेऽपि न तथोपस्थि

नन्वेवं परस्मै भाषाइत्यादौ स्मै भावो न स्यादिति चेन्न॥ अंतरंगत्वेन स्मायाद
तिजनकत्वं उपस्थिते शक्तिग्रहासमानविषयत्वात्॥ नन्वेवं परस्मै भाषा इत्यादौ स्मै भावो न स्यादिति चेन्न॥ अंतरंगत्वेनापीतिन्यायाविषयत्वात्॥ एजकुमारीपुत्र इत्यादौ हृ
षुकृते ष्वेव समाससंज्ञाप्रवृत्तेः॥ समासस्य विप्रयोज कत्वाभावेनांतरंगानपीतिन्यायाविषयत्वात्॥ संज्ञोपसर्जनीभूतप्रथ
स्वचारणप्रकारेण निर्वाहसंभवाच्च॥ अत्र संज्ञोपसर्जनीभूता इति वार्त्तिकारंभादन्वर्थसंज्ञाश्रयणमेव श्रेयः संज्ञोपसर्जनीभूतप्रथ
मचरमादीनां संज्ञाव्यावर्त्तय इति बोध्यं॥ नावयवानामिति॥ केचित्तु मासपूर्वायेत्यादौ स्मायादिवारणाय विहितविशेषणाश्रयणे गो
रवात्सप्तमीनिर्द्देशानुरोधाच्च तृतीयासमासे विद्यमानसर्वादीनां निषेधः स च पूर्वोक्तरीत्या पाठाद्बहिर्भावद्वारैवेति सर्वाद्यंतत्वप्रयु
क्तसर्व नामसंज्ञासमुदायेन प्रवर्त्तते॥ स्पष्टं चेदं विभाषादिगिति सूत्रे वृत्तिपदमंजर्यां॥ अत एव भाष्ये त्र सूत्रे समास इति वर्त्तमा
नेपुनस्तदुपादानं योगविभागेन वाक्ये निषेधार्थमित्युक्तं॥ प्रथमार्थकसप्तमीनिर्द्देशे तु तदनुपपत्तिरित्याहुः॥ अवयवस्यानिषेधे
फलाभाव इति॥ केचित्तु विहितविशेषणानाश्रयणे एवं सति संभवती तिवर्णाश्रमेतराणामित्यादौ सुड भावस्तत्फलमित्याहुः॥ अ
न्यथात एवेति॥ अवयवनिषेधवादिनस्त्वेवेत्यर्थः॥ अत एवेति॥ उक्तरीत्याऽवयवेभ्यः पृथक् तदनुत्पत्तेरेवेत्यर्थः॥ अन्यथा समुदाय
स्यशीभावे कर्त्तव्ये एव विकल्पोऽप्यवयवस्य नित्यसर्वनामसंज्ञामाश्रित्या कचो दुर्वारतया तदसंगतिः॥ ममत्ववयवरूपसर्वनामत्वेपि

वि० तदर्थमात्रेकुत्सान्वयाभावेनाकजभावः॥समुदायकुत्सामादायतुनाकच्समुदायस्यासर्वनामत्वादितिभावः॥नन्ववयवकुत्साविव
८१ क्षायाउक्तरीत्याऽभावेऽकचःप्राप्तिरेव नेतिशीभावंप्रतिविभाषाऽकजि न भवतिइतिभाष्यंपुनरसंगतमेवेत्यतआह॥समुदायेति॥
यद्वातएवेत्यस्यावयवमात्रस्यनिषेधाभावादेवेत्यर्थः॥तथात्वेहिसर्वाद्यर्थकसर्वाद्यंतत्वेनसमुदायस्यनित्यसर्वनामसंज्ञायामकच्
स्यादेवेतिभाष्यासंगतिः॥अकजिनभवतीति॥ननुकृताकचासमासेनानेनविकल्पः॥अज्ञाताद्यर्थकत्वेनासर्वार्थकत्वात्॥पूर्वं द्वं
द्वेजशिसर्वनामसंज्ञाविकल्पेपश्चादवयवकुत्सामादायाकचिशीभावविकल्पघटितंरूपमित्यवयवकुत्साद्यर्थकाकजभिप्रायकत्वमप्य
कजिनभवतीतिभाष्यस्यसंभवतीत्याशंक्याह॥तत्रेति॥मानाभावाच्चेति॥अन्येतुदांडिनायनसूत्रेस्वरसर्वनामैकश्रुत्याद्वयोरे
क्ष्वाकशब्दयोरिवोदात्तानुदात्तयोस्त्वशब्दयोःसकृत्पठितेनग्रहणेसिद्धेचत्वेत्सुभयपाठःएकस्यतांतत्वेमानमित्याहुः॥जरा
याजरसन्यतरस्यां॥अक्तपरिमाणस्येति॥परिछिन्नपरिमाणस्येत्यर्थः॥स्थानिवुत्थेवेति॥नचैवंलावस्थायामप्यपिबदित्यादौ
आगमिबुध्यासाट्कस्यपिबादेशापत्तिरितिवाच्यम्॥उक्तयुक्त्यानिर्दिश्यमानत्वाप्राप्तावपिपादःपदित्तिसूत्रस्यभाष्यप्रामाण्येन
सागमस्यानिर्दिश्यमानत्वानंगीकारात्॥अन्येतुनिर्दिश्यमानत्वंस्वबोध्याघटितत्वेसतिस्वबोध्यत्वं॥तच्चसागमकेतदंतेचनाआदेशे

त्वस्त्येवेतितत्रनिर्दिश्यमानपरिभाषयाऽऽदेशवारणं॥ यद्वास्वंरूपमित्येतद्भिन्नशक्तिग्राहकशास्त्राननुसंधानकालीनस्थानषष्ठ्यं
तपदजन्योपस्थितिविषयत्वरूपनिर्दिश्यमानत्वमादेशेपि॥ यदागमन्यायोपिशक्तिग्राहकएव॥अस्यच्चावित्यादौजातिपक्षोऽथ
वायतःषष्ठ्युच्चारितातत्वतत्स्थानिकत्वान्यतरत्वं॥तिसृणामित्यत्रतिस्रादेशेकृतेत्रयादेशाशंकापरभाष्यप्रामाण्यादित्याहुः॥वैचि
त्र्यायेति॥नचपदत्वभत्वयोर्द्वयोरननुसंधानेपिनापिनिर्जरसेत्यादिसिद्धेरतस्तयोरलेखः॥अन्येतुदद्भ्यांमाभ्यामित्येतदर्थंस्वादि
ष्वित्यस्यावश्यपाठ्यतयादत्तइत्यादौजश्त्वशंकायांयचिभमित्यपिपाठ्यमितिविशेषइतिवाच्यं॥तयासतिशिवोर्च्यइत्युदाहरणे
प्रथमयोःपूर्वसवर्णेनादिचीत्यनयोरनुपन्यसनीयत्वापत्तेः॥तदभावपक्षेतस्याप्राप्तेरिति॥अभावपक्षोपक्रमेपुनर्भावपक्षस्वीका
रायोगादितिभावः॥तस्याप्राप्तेत्यस्य॥जरसादेशस्याप्राप्तेरित्यर्थः॥पाठकस्तु तस्याप्राप्तेतिपाठंस्वीकृत्यसंनिपातपरिभाषायाअप्रा
प्तेत्यर्थमाह॥ध्वनितंचेदमिति॥नपुंसकद्वितीयेकवचनेजरसभावइत्येतदर्थमित्यर्थः॥भवितव्यमिति॥उक्तमितिशेषः प्रश्लेषआ
वश्यकइत्युत्तरमित्याहुः॥परत्वेत्यपपाठः॥विभक्त्यादेशानामिति॥पूर्वोक्तोपलक्षणविभक्तिसंबंधिकार्यमात्रस्येत्याह॥विभक्ति
संबंधीति॥इत्याहुरिति॥अन्येतुनुम्जरसावितिवार्त्तिकेनुम्पदंलक्षणयामुम्शीभावोभयपरम्॥यद्वानित्यत्वात्पूर्वंशीभावःजर

कि० सादेशस्तुननित्यः॥शीभावेकृतेनुमितद्प्राप्तेरितिशंकापरिहाराय॥शीभावोत्तरमपिविप्रतिषेधेनजरसः प्राप्तिरितिभाष्यकृतोक्तं
८२ नंतुशीभावोत्तरमेवजरसित्याशयेन॥अयंविप्रतिषेधोपन्यासः जरसोनुमासमबलतामभ्युपेत्य॥वस्तुतोजरसादेशः सर्वविधि
भ्योबलवान्जरसोऽवकाशोजरसाजरसेइतिजरयाइतिसूत्रस्यभाष्यप्रामाण्यात्॥अन्य याजरसइत्यत्रजरसादेशात्परत्वाद्याडाप
इतियाडितितदसंगतिः॥एवंचविभक्तिसंबंधिकार्यमात्रेपूर्वविप्रतिषेधेनेत्यस्यक्वावकाशः॥जरसादेशस्यसर्वतः प्रबलत्वात्।ए
तेनएवंस्त्रियांजरसादेशेकृतेइत्यारभ्यतेषांपरत्वादित्यंतोग्रंथोनिरस्तोवेदितव्यः॥तथाचपुंसिनिर्जरेणनिर्जरसेत्यादिरूपंस्त्रियां
जरायैजरसइत्यादिभवति॥नचैवंटाङसीतिसूत्रस्यकैयटासंगतिरितिवाच्यं॥वैकल्पिकत्वेनप्रथमंजरसादेशाभावेइनादेशेकृ
तेपश्चात्प्राप्तस्यजरसः सन्निपातपरिभाषयावारणमित्याशयात्॥नचाऽभावोपक्रमेपश्चान्नभावापत्त्यादरणं॥अन्यथाशिश्वि
यतुरित्यादौद्वित्वोत्तरंविभाषाश्वेरितिसंप्रसारणापत्तिरितिवाच्यं॥अकारनिमित्तकस्यजरसोऽभावोपक्रमेपिइकारनिमित्तकस्या
भावानुपक्रमात्॥शिश्वियतुरित्यादौतुश्विवुत्थ्येवपश्चात्प्रवृत्तेर्विशेषः॥नपुंसकद्वितीयैकवचनेतुजरसादेशोभवत्येव॥अथेहतु
कस्मान्नभवतिअति जरसंपश्येतिभाष्यात्॥अम्लुकृभ्यांजरसः परत्वाच्च॥नचलुकः सर्वविधिभ्यः प्राबल्यंवहिरंगलुकएवतया

त्वात्॥स्वमोरितिसूत्रस्यंत्यदादिभ्यश्चेतिवक्तव्यमितिवार्तिकंमानंतेनभवतादित्यत्रलुकंबाधित्वातातङ्॥अतिजरमतिजरैरिति
भवितव्यमित्यग्रिमभाष्यतुप्रथमैकवचनविषयं॥ध्वनितंचेदंजरायाइतिसूत्रेभाष्येतथाहि॥अथेहलुक्कस्मान्नभवतिअतिजरसं
पश्येतिपूर्वप क्षिणाशंकितंततःपूर्वपक्षिणाऽस्यत्रविशेषः॥नाकृतेऽम्भावेजरसादेशः प्राप्नोति किंकारणमचीत्युच्यते॥नचायं
प परिहारःद्वितीयैकवचनेप्यवशिष्टइतिवाच्यं॥अनवद्योधात्॥किंकारणमचीत्युच्यतइत्यंतएवविशेषप्रतिपादनपरोनात्रसः॥त
स्यचायमाशयः॥अतोमित्यम्प्रवृत्तिंविनानजरस्भावःसोर्हलादित्वात्॥अम्भावेतुनलुक्॥अमाबाधितत्वात्॥अमाबाधितस्या
पिपुनःप्रवृत्तौज्ञानमित्यत्रापितदापत्तिरिति॥नचजरसादेशार्थसोरम्विधानेऽकारादेशविधानेनैवसिद्धावम्विधानवैयर्थ्यात्त
तोद्वितीयैकवचनेलुकंसमाधत्तेसिद्धांती॥यदाचजरस्भावःकृतस्तदालुक्नभविष्यति॥सन्निपातलक्षणोविधिरनिमित्त मि
ति॥यदाचेत्यस्यामंलुकंचबाधित्वापरत्वादितिशेषः॥ततःपुनःपूर्वपक्षीप्रथमैकवचनेतृतीयाबहुवचनेचशंकते॥यद्येवमतिज
रसाऽतिजरसैरितिनप्राप्नोति॥अतिजरमतिजरैरितिभवितव्यमिति॥लक्ष्यानुरोधाज्जरसादेशविषयेसन्निपातपरिभाषाना श्री
यतइतितद्भावः॥ततःसिद्धांत्याह॥गोर्नदीयआह॥इष्टमेवैतत्संगृतमित्यादि॥किंकारणमचीत्युच्यतेऽम्भावेकृतेसन्निपातपरिभा

वि॰ षयानजरसितिनघोक्तपाठोत्तरंतुभाष्यपुस्तकेषुक्वापिनोपलभ्यते॥पूर्वग्रंथासंगतश्च प्रथमैकवचनेऽतिजरसंतिष्ठतीत्यत्रलुक्कु
८३ तोनशंकितइतितटस्थेनशंकितेसन्निपातपरिभाषयाजरसादेशाप्रवृत्त्या क्तरूपमेवदुर्घटमितिसमाधानस्यपाठांतरकल्पनया
भवदभिप्रेतस्यप्र तिपादनायास्त्यत्रविशेषइत्युक्तस्यसंगतेः॥तथोक्त्याहिअतिजरसंतिष्ठतीतिरूपंस्वीकृत्यविशेषमात्रमभिधित्सि
तमितिप्रतीयते॥किंचास्त्यत्रविशेषः॥नात्राकृतेऽम्भावेजरसादेशःप्राप्नोतिकिंकारणमचीत्युच्यतेऽम्भावेकृतेसन्निपातप
रिभाषयानजरसितिभवत्कल्पितपूर्वभाष्येणप्रथमैकवचनेऽम्भावोत्तरमेवजरसप्राप्नोति॥द्वितीयैकवचनेत्वमादेशात्प्रागेवपर
त्वाज्जरसितिलभ्यते॥तच्चविभक्त्यादेशाःपूर्वविप्रतिषेधेनेतिवदत्तस्तवविरुद्धम्॥यद्येवमतिजरसमतिजरसैरितिनप्राप्नोती
तिभाष्यस्यभवदुक्तंद्वितीयैकवचनाभिप्रायकत्वमपिनयुक्तं॥यद्येवमितिपदस्वारस्येनपूर्वग्रंथोक्तंयुक्तिमुपजीव्येयंशंकेतिप्र
तीयते॥पूर्वग्रंथार्थश्चोक्तरीत्याऽतिजरसंपश्येत्यादावमादेशात्पूर्वंजरसः॥तदंगीकारेचद्वितीयैकवचनेकथंसन्निपातपरिभाषयाज
रसादेशाभावः॥किंचद्वितीयैकवचनेलुकिपूर्वपक्षिणाशंकितेततःपरेणप्रथमैकवचनेलुक्कुतोनशंकितइतिपृष्टेऽस्त्यत्रविशे
षइतिपूर्वपक्षिणाविशेषेप्रतिपादितेपश्चात्प्रवृत्तौयद्येवमितिग्रंथोनतावत्पूर्वपक्षिणः॥तेनजरसादेशमंगीकृत्यैवलुकआपाद

नात्॥नापितटस्त्वस्येष्टमेवह्येतत्संगृहीतमित्यग्रिमभाष्यासंगतेः॥अतिजरसैरित्युपन्यासासंगतेश्च॥नापिसित्यांतिनः॥तेनजरसा
देशाभावप्रतिपादनद्वारोक्तरूपस्यैवखंडनीयतयाऽतिजरसमितिनप्राप्नोतीत्यनिष्टापादनासंगतेः॥अतएवङ्याप्ग्रहणेऽदीर्घइ
तिवदित्याद्यप्ययुक्तं॥अदीर्घपदेनदीर्घभिन्नजरसोपिग्रहणात्॥दीर्घभिन्नस्यह्रस्वस्यैवग्रहणेतुचित्रायांजातश्चित्रइत्यादौहल्
ङ्यादिलादिलोपयाडागमाद्यापत्तिरित्याहुः॥पद्न्नोमास्॥अन्यतरस्यामित्यस्यानुवृत्तिंदूषयित्वास्वानुरूपाःस्थानिनआक्षिप्यंत
इत्युक्तमपिदूषयितुमाह॥शिरसोग्रहणंकर्त्तव्यमित्युक्तमिति॥विकल्पानुवृत्तौदूषणांतरमाह॥वाकेशेष्विति॥येचतस्थितइत्यत्रै
ववाकेशेष्वित्यारंभेणान्यतरस्यांग्रहणस्याननुवृत्तेरुत्तरत्रमंडूकप्लुत्यातदनुवृत्तेश्चकल्पनामपेक्ष्यसर्वथातस्यास्वरितत्वकल्प
नैवन्याय्येतिभावः॥ननुयाडादीति॥ह्रस्वनद्यापइत्यत्रनप्रश्लेषइत्यभिमानेनेदम्॥जरसामित्यादौनुडभावार्थंतुप्रश्लेषआवश्य
कइत्युक्तंतुनविस्मर्तव्यम्॥व्याख्यानादिति॥अंत्यत्वप्रयुक्तायस्येत्संज्ञेतिव्याख्यानात् औटष्टकारेणैवप्रत्याहारोनतुटाटकारेणे
त्यर्थः॥प्रथमैकवचनमिति॥सप्तमीबहुवचनग्रहणेऽसर्वनामस्थानइतिव्यर्थंस्यादित्यर्थः॥व्याख्यानादिति॥तदुत्तरंप्रत्ययाभा
वाच्च॥कप्प्रत्ययावधीत्युक्तौकप्रत्ययस्यनस्वादिषुग्रहणमितिप्रतीयतेऽतआह॥तदंतेष्विति॥नपदांतसूत्रस्थइति॥तत्रहिवेत

स्वानित्यत्र रुत्वमाशंक्य भत्वेन समाहितं तत्र च भसंज्ञाया रुत्वप्रतिबंधातिरिक्तं न किंचित्कार्यम्॥ व्याप्त्यर्थेति॥ ननु मर्यादार्थ
काडा उवार्था दितिनिर्देशेपि न कोपि दोष इति चेन्न॥ समाहारे द्वंद्व बहुव्रीहिसंज्ञयोः समावेशापत्तेः॥ वक्तुं युक्तमिति॥ न तूक्तं वर्ण
गौरवात्पदगौरवस्य गरीयस्त्वादिति पाठकः॥ संख्यावाच्येकशब्दोपादानादिति॥ वस्तुतस्तु दीक्षितो नव्यश्च द्वावपि स्थूल इत्यत्र वानौ
केवलार्थकैकशब्दस्यैवात्र ग्रहणात्॥ केवल्यं हि सजातीयसंज्ञांतरासमानाधिकृतत्वम्॥ एकाकी तिष्ठतीत्यादौ तथा प्रतीतेः॥ ननु
परत्वानवकाशत्वाभ्यामेव बाधसिद्धौ आकडारादेकेति व्यर्थमित्याशंक्याह॥ आभ्यामेवेति॥ परत्वानवकाशत्वाभ्यामेवेत्यर्थः॥
अन्यत्राकडारीयविषयसंज्ञाभिन्ने॥ लोके संज्ञाविषय इति॥ ग्राम इति संज्ञाया वाराणसीति संज्ञायाः कृष्णादेवदत्तादिसंज्ञया कृष्णं
धकादिसंज्ञायाश्च बाधादर्शनादित्यर्थः॥ आकडार इति॥ तेन धनुषा विध्यतीत्यत्र न पंचमी॥ विरोधाभावेनेत्युक्त्या तत्स्पष्टत्वा
त्॥ पर्यायापत्तिर्दोष इति॥ इदमयुक्तं॥ विप्रतिषेधे परमिति परकार्यस्यैव प्रवृत्तेः॥ बाध्यसामान्यचिंतयेति॥ अत्र च सितिचेति
सूत्रं मानं॥ तस्थिभवदीय इत्यादौ पदत्वार्थं॥ अंतरंगत्वात्सुप्तिङंतमिति पदत्वे तु तद्वैयर्थ्यम्॥ नन्वाकडारीयसंज्ञयोः कार्यकालत्वे एकदे
शास्थत्वेनयापरेत्य संगतमित्याशंक्याह॥ आकडारस्येति॥ णलुत्तमो वेति॥ पुरुषसंज्ञा तिङ्क्षु परस्मैपदसंज्ञाया बाधिकाऽपवादत्वा

त्॥ परस्मैपदसंज्ञा तु शतृक्वसोश्चरितार्था॥ तथा च परस्मैपदानामित्यनेन शतृक्वसोरेव णलादेशः स्यात्॥ तस्य च स्थानिवद्भावेनोत्तम
त्वाभावात्तदसंगतिरिति भावः॥ इदमुपलक्षणं तयोः समावेशे सिचि वृद्धिरित्यपि ज्ञापकं बोध्यं॥ एकदेशिन एवेति॥ इदमयुक्तं॥ इ
शब्दस्य तदंतसंज्ञापक्षेपि समानावधिकया लघुसंज्ञया परत्वाद्बाधेन घित्वानापत्तेः॥ घिसंज्ञा तु हरिशब्दे चरितार्था तत्र भिन्नावधिक
त्वेन द्वयोः समावेशात्॥ अस्यस्त्री इत्यत्र गुरुसंज्ञया बाधेन नदीत्वानापत्तेश्च॥ तस्मादेरजित्यादिनिर्देशोक्तयोः समावेशो भवता वा
च्यः॥ स च समो वर्णसंज्ञापक्षेपि॥ तथा हि वेतस्वानित्यादौ भसंज्ञाया इवादीदिपदित्यादौ अभ्यासेकारस्य घिसंज्ञायां दीर्घो लघोरित्यस्य
वैयर्थ्यापत्त्या तद्बलेन तयोः समावेशाकल्पनात्॥ पंचमीसमासाश्रयणादिति॥ परस्येत्येतदर्थांतर्भावेण वृत्तिः॥ पंचमी भयेनेत्यत्र
पंचमीति योगविभागेन भाष्यकृता तत्पर इत्यत्र पंचमीसमासाश्रयणादिति भावः॥ दीक्षितेन पंचमीसमासोदाहरणस्यापीपचन्नि
त्यस्याविदिसाहचर्येण लङ एव भेर्जुसमाश्रित्यान्यथासाधनात्पंचमीसमासस्य लङि जुस्वारणप्रयोजनमाह॥ तेनेति॥ अत एवेति॥
एवंजातीयस्य लेजुसोऽनिष्टत्वादेवेत्यर्थः॥ इदमुपलक्षणं॥ अविदन्नित्यादौ सिजभ्यस्तेति जुसभावोपि फलम्॥ ननु भेरित्यत्रेकारोऽवि
वक्षितः॥ तथा च ङितो भस्य जुसिति वाक्यार्थः॥ इतश्चेतीकारलोपे भमात्रस्यैव ङित्त्वादिना संभवात्। तथा च प्रत्येषिषन्नविदन्नित्यादौ

वि॰ ८५

नदोषः॥ झत्वस्यालवृत्तित्वेनस्थानिवद्भावेनानेतुमशक्यत्वात्॥ एवंचपंचमीसमासस्योदाहरणं मृग्यमितिचेत्सत्यं॥ पंचमीसमासानित्यत्वेज्ञापकमाह॥ प्रविगणय्येति॥ निष्ठायांसेटीत्यत्रसेट्ग्रहणमप्यत्रज्ञापकंबोध्यं॥ तत्थिकारितमित्यादावपि डिकृतएव णिलोपोयथास्यान्नततःप्रागित्येतदर्थम्॥ पूर्वंणिलोपेहिएकाजितिनिषेधादिण्नस्यात्॥ पंचमीसमासस्यनित्यत्वेहिपूर्वंणिलोपेपितस्यस्थानिवद्भावादेवेण्निषेधाप्रवृत्तेस्तद्वैयर्थ्यंस्पष्टमेव॥ केचित्यादिआहुरित्यंतोऽपपाठः॥ स्थानिवद्भावलब्धाकारस्यैवप्रविगणय्येत्यादौव्यपदेशिवद्भावेनलघुपूर्वत्वस्वीकारेप्रचिकीर्षेत्यादावयादेशापत्तेः॥ अंतरंगपरिभाषावारणायाह॥ वतिघटितेति॥ इदमयुक्तं॥ नलुमतेतिनिषेधानित्यत्वेनसुप्परत्वमादायत्वन्मतेपिसूत्रेणसिद्धिसंभवात्॥ तदनित्यत्वस्यागतिकगतित्ववत्शब्दत्वेनसादृश्यमाश्रयपदादिप्रवृत्तिरपिअगतिकगतिः॥ भाष्यपठितेति॥ इदमप्ययुक्तं॥ नासिकाशब्दप्रयोगाभावायतदावश्यकत्वात्॥ तस्माद्इति॥ व्यवस्थायाइत्यर्थः॥ नलुमतेतिनिषेधाऽनित्यत्वेनसर्वत्रसप्परत्वादितिभावः। पादयतीत्यादौपद्भाववारणायसुप्येवपदादयइतिव्यवस्थार्थंतच्चारितार्थ्यादयुक्तमेतत्॥ नन्वेवंसूत्रवैयर्थ्यंप्राप्नोतीत्यतआह॥ तत्वेपीति॥ अनादेशत्वेपीत्यर्थः॥ आवश्यमीकत्वादिति॥ एतेनपादशब्दात् हृदयशब्दात्तौतन्निमित्तकेपत्हृदादेशेसन्निपातपरिभाषयालोपलुकौनस्या

तामित्यपास्तं॥ ननुकोशेपतद्दादिवत्नसमासादयोपिकुतोनोक्ताइतिचेन्नपदादीनामिवतेषांसर्वनामस्थानप्रयोगाभावा
दित्यवेहि॥ ननुकोशशब्दानांलोकप्रसिद्ध्यशब्दानुकरणत्वेनशब्दपरत्वादभिव्यक्तपदार्थायइतिन्यायेनपदाद्यप्रवृत्तिसंभवा
त्पदंघ्रिःस्वांतंहृदित्यादेःप्रकारार्थत्वप्रयोजनत्वोक्तिरसंगतेत्यतआह॥ कोशेशब्दाइति॥ अर्थपराएवेति॥ अनुकरणत्वेप्रमाणा
भावादितिभावः॥ ननुतत्तदर्थेशक्तिग्रहस्यकोशाधीनत्वात्शक्तिग्रहमंतरेणार्थपरत्वासंभवात्कोशस्यशब्दानामर्थपरत्वंशश
विषाणसदृशमतआह॥ शक्तिग्रहस्त्वितिसामान्यतइति॥ अर्थविशेषाअपूरस्वारणेइत्यर्थः॥ इदंपदमर्थबोधकंपदत्वात्गोप
दवदित्यनुमानंबोध्यं॥ एवंचेति॥ अनेनानुमानेनसामान्यतोविष्णुपदार्थोस्तीतिज्ञानेविष्णुपदश्रवणेनतत्स्मरणत्वेइत्यर्थः
इतिक्रमेणेति॥ कोशस्यपर्यायेष्वेकंपदंविशिष्यार्थबोधकंविदितशक्तिकेएकपदंपुरुषंप्रत्येवकोशस्यशक्तिग्राहकत्वादत
आह॥ स्वस्वप्रसिद्धेति॥ तत्तत्पुरुषस्येति॥ केचित्पुरुषप्रतिविष्णुपदमर्थविशेषेगृहीतशक्तिकमन्यंप्रतिनारायणपदंतथेतिभा
वः॥ अत्रभाष्यंप्रमाणयति॥ अतएवेति॥ इदमुद्गीताधिकरणस्यशांकरभाष्योपलक्षणम्॥ तत्रहिसामानाधिकरण्यंचतुर्धाऽ
ध्यासेनापवादेनैकत्वेनेति॥ अध्यासेनयथा॥ इयंप्रतिमाविष्णुरिति॥ अपवादेनयथानेदंरजतमित्येकत्वेनयथाद्विजोत्तमोब्रा

कि॰
८६

ह्मणो भूदेव इति॥ विशेषणत्वेन यथा॥ नीलमुत्पलमित्युदाहृतम्॥ तत्रैकत्वोदाहरणे उक्तरीतिः स्पष्टैव॥ कोशतात्पर्यादिति॥ तथा च भेदाख्यानाय न द्वंद्वो नैकशेषो न संकरः कृतोत्र भिन्नलिंगानामनुक्तानां क्रमादृत इति कोशकारैः परिभाषितं॥ अस्यार्थः॥ भेदस्य लिंगभेदस्य स्वरूपभेदस्य चाख्यानाय द्वंद्वैकशेषसंकरा न कृता इति॥ लिंगभेदाख्यानाय कुल्यादिनी वज्रमस्त्री स्यात्कुलिशमित्यस्य स्थाने कुलिशह्रादिनी वज्रा इति द्वंद्वः॥ सहो बलं सहा मार्ग इत्यस्यास्यापवादः भिन्नलिंगानामनुक्तानां क्रमादृत इति॥ भिन्नलिंगानामिति भिन्नस्वरूपाणामुपलक्षणं॥ तेन समानलिंगानां समानस्वरूपाणां द्वंद्व एकशेषश्च कृत एव। यथा॥ स्वर्गनाकत्रिदिवत्रिदशालया इति॥ पादाः शरश्म्यंघ्रितुर्यांशा इति च॥ अनुक्तानामित्यनेन जनयित्री प्रसूर्माता॥ तातस्तु जनकः पिते ति स्थानां तन्निर्दिष्टानां द्वंद्वैकशेषौ कृतावेव॥ मातापितरौ पितराविति॥ एतेन खं नभः श्रावणो नभा इत्यत्र खश्रावणौ तु नभसी इति न कृतमिति मंजूषोक्तमपास्तं॥ नभोंतरिक्षं गगनं नभाः श्रावणिकश्च स इत्येवं स्वस्वपर्यायेषु पठितत्वात्॥ क्रमादृत इति॥ क्रमः प्रस्तावस्तं विना संकरो न कृतः सति प्रस्तावे संकर एव॥ यथेंद्रादिप्रस्तावे मेरुः सुमेरुरित्येवमादि रूपेण गिरिवर्गादिभ्यः कृष्य संकरो न कृतः॥ सति प्रस्तावे संकरः कृतः॥ ननु विष्णुपदार्थाभिन्नो नारायणपदार्थ इत्यादिबोधे एकशेषो न प्राप्नोति॥ इदित इत्यादिनिर्देशेन

सहविवक्षायामेवतत्प्रवृत्तेरिति चेन्न॥करीरादिपदार्थानामप्रसिद्धानां मिलितानांप्रसिद्धघटपदार्थेन्वयभेदेनान्वयेघटःक
रीरःकलशइत्यादौकरीरादिपदानामेकशेषापत्तिरित्याशयात्॥पाणिनिनेति॥प्रकृतिवदनुकरणमित्यति देशेअत्वकरण
वदेकशेषाकरणादिति भावः॥एतेनेति॥उत्तरपदेइत्यस्यसप्तम्यन्तत्वाभावेनेत्यर्थः॥इत्यदंताः॥भाष्यानुक्तक्विब्भ्यइति॥एतेन
ध्यायतेर्धीरित्युपपन्नं॥ईत्वंनकृतमितीति॥इदमप्राधान्येनवर्णाश्रयेप्रत्ययलक्षणमितिवार्तिकमतेन॥वस्तुतस्तुधांस्त्वाइ
त्यत्रक्विपिईत्वापादनंनतावद्वार्तिकमतेन॥तेनईत्वमवकारादाविति निषेधारंभात्॥नापिभाष्यमतेन॥तेनवर्णाश्रयेप्रत्यय
लक्षणानंगीकारात्॥तदेतदभिप्रेत्याह॥अन्येत्विति॥दीर्घविधायकेति॥नन्वेवंरामानित्यत्रदीर्घेकृतेआतोऽनापइतिलोपा
पत्तिरितिवाच्यं॥आंतोनापइत्यनेनाकारांतादंगाद्विहितेभसंज्ञानिमित्तेप्रत्ययेलोपविधानेनादोषात्॥एवंरामाणामित्यादावपि
वक्ष्यमाणरीत्यादीर्घेआतोलोपोनेतिबोध्यं॥इत्यादंताः॥यूइतीति॥पूर्वसूत्रेतस्यदीर्घपरत्वेपिशब्दाधिकारादत्रह्रस्वपरत्वं॥ह्र
स्वइत्यनेनसामानाधिकरण्यानुरोधात्॥तदेतदभिप्रेत्याह॥अनुवृत्तयुभ्यामिति॥अनवकाशत्वादिति॥ननुगवांपत्येब्राह्मण्येइ
त्यत्रपतिःसमासएवेतिनियमेनघित्वाप्रवृत्तौचरितार्थानदीसंज्ञामत्यैइत्यादौपरत्वाद्घित्वेनबाध्यते॥अतएवऊदुपधाया

गोहइतिसूत्रेउऊदितिप्रश्लेषमाश्रित्यगोहइतिविकृतनिर्देशः प्रत्याख्यातोभाष्ये॥तत्रहि॥निजुगुहतुरित्यत्रचरितार्थमुत्वंबाधि
त्वागूहयतीत्यादौपरत्वाद्गुणेआंतर्याद्दीर्घऊकारइत्युक्तं॥निजुगुहतुरित्यादौगुणस्यप्राप्तिसत्त्वेप्युत्वस्यतदपवादत्वमनाश्रित्ये
दंभाष्यंप्रवृत्तमितिस्पष्टमेवेतिचेत्सत्यं॥नन्वधिकारादित्यसंगतं॥एतस्यपरिभाषात्वात्॥अधिकारत्वेहिप्रतिसूत्रेसंबंधकल्प
नागौरवं॥बहुषुबहुवचनमित्यादौतदसंबंधायमंडूकप्लुतिकल्पनेऽतिगौरवमित्यतआह॥वृत्थिस्थत्वादित्यर्थइति॥स्पष्टतयेति॥
शब्दस्वरूपंविशेष्यमध्याहृत्यतदंतविधिस्तुकल्पनीयत्वादस्पष्टइतिभावः॥नमुनेइति।नमुनेइत्यत्रनेत्यकारस्तूच्चारणार्थइतिभा
वः॥वार्तिकविरोधादिति॥पूर्वपक्षिणोवार्तिकविरोधस्याकिंचित्करत्वादिदमयुक्तं॥अमुनाघटेनेतिलक्ष्यासिद्धेरितितुवक्तुंयु
क्तं॥नीतिनोक्तमिति॥नेइतिनिर्देशस्तुशब्दस्वरूपस्यविशेष्यत्वेननपुंसकत्वमाश्रित्यतस्यापिनुमोपिज्ञानगौरवमिति॥न
न्वाङोनुट्पुंसीतिन्यासोस्तुनमुनेइत्यत्रचनमुनीत्येवचन्यासोस्त्वितिचेन्न॥अमुष्मैकुलायेत्यादौमुत्वस्यसिद्धत्वेननुमापत्तेः॥
ननुनुम्विधिंप्रतिसिद्धत्वेपिस्मा यादेशंप्रत्यसिद्धत्वेनमुत्वात्पूर्वस्मायादेशेकथंनुमःप्राप्तिरितिचेन्न॥अनेइत्यादौमुत्व
स्यासिद्धत्वेनसवर्णदीर्घस्येनादेशगुणयोर्वावारणायनाभावेकर्तव्येकार्यमात्रंप्रत्यसिद्धत्वनिषेधावश्यकत्वात्॥सवर्णदीर्घस्मा

यादेशयोर्नुम्विघटकाविशेषात्॥ पररूपंत्वंतरंगत्वान्नुत्वात्पूर्वमेवप्रवर्त्तते॥ नमुनेइत्यत्रमुनीतिन्यासेतुआङोनुट्पुंसीतिसुव
चं॥ नत्वस्येति॥ आङित्यस्यासंज्ञात्वमनाश्रित्याङोनादेशविधानादेवढकिलोपइत्यादौविषयप्रत्ययस्याङनादेशंविधायतदीयङ
कारस्यनेत्वमित्यर्थः॥ एवमौङइत्यत्रापिबोध्यं॥ वार्तिकमतेपीति॥ अपिनाभाष्यकृन्मतेपि॥ यादिकृते निर्दिश्यमानपरिभाष
याशीभावस्यप्रवृत्त्ययोग्यत्वेनखट्वायामित्यादावाटइवभाष्यकृन्मतेपिनिरवकाशत्वेनेतिनपाठः॥ पूर्वशीभावप्रवृत्तेः॥ केचि
त्वंगस्येत्यनेनसामानाधिकरण्यायाबंतांगस्यनिमित्तस्यौङःशीभावविधानात्कृतेपियाटिशीभावप्रवृत्तेः॥ भाष्यकृन्मतेतत्रकेचिं
ङिन्यन्यायादेवशीभावेनयाटोबाध इत्याशयइत्याहुः॥ अल्विधित्वेनेति॥ ननुङकारस्यवस्तुतोऽनुबंधत्वेनैतस्याप्यनुबंध
कार्यत्वमितिचेन्न॥ तथासतिप्रपठ्येत्यादाविडापत्तेः॥ त्काप्रत्ययककारस्यानुबंधत्वेनस्थानिवद्भावेनवलादित्वस्यसुवचत्वात्
नन्वेवंतिविंशतेर्डिति॥ ष्ठिवुक्लमुचमांश्चितिअनुदात्तङितआत्मनेपदमित्यादावपीत्यदंव्यर्थमितिचेत्सत्यं॥ ङसेरित्येवेति
नचद्विवचननिर्देशात्ङसोग्रहणंस्यादितिवाच्यं॥ अतीत्यस्यानुवृत्त्यादोषाभावात्॥ औतस्तकारस्योच्चारणार्थत्वादित्संज्ञाविरहे
वनिवृत्तिः॥ अतएवनस्वरितत्वमितिप्राचीनोक्तंदूषयितुमाह॥ यदित्विति॥ स्वभाववादस्यस्वभावतएवनिवृत्तिवादस्योभय

त्रोच्चारणार्थे इत्संज्ञकेच ॥ ननुतपरस्तत्कालस्येत्यनेनऔकारएवविधेयइतिनविभक्तावितिशंकासमाधानेनिष्फलेइतिचेत्स
त्यं ॥ ध्वनितइति ॥ तत्रहिनान्नलोपइतिन्यासेनंदितेत्यादौनलोपआपादितः ॥ उक्तपरिभाषासत्वेतुनशब्दस्यप्रत्ययत्वाभावा
देवनलोपाप्रसक्तौतदसंगतिः ॥ नेतिदिगिति ॥ ननुतपरस्तत्कालस्येत्यनेनौकारमात्रस्यैवतस्पतित्वाभावात्स्वरितत्वशंकात
त्समाधानेद्वेअपिनिष्फलेइतिचेन्न ॥ किमोदित्यत्रापितथात्वापत्तौक्केत्यत्रस्वरितत्वानापत्तेः ॥ यदिचतदर्थतित्पदंतिर्ह्येऽध्यप
रंतदाप्रकृतेपिंतदापत्तेः ॥ नव्यमतेऽपुदित्सूत्रस्यभाष्यानुरोधेनानुबंधविनिर्मुक्तपदार्थोपस्थित्यंगीकारेणतित्पदस्यतद्बोध्य
परत्वस्यावश्यकत्वाच्च ॥ तदेतदभिप्रेत्यतित्स्वरितमितिसूत्रेकैयटेतिताप्रत्यायितसंज्ञाधर्मेणसंज्ञीकथ्यतइत्यस्तितित्पद
व्यपदेशआदेशस्येत्याद्युक्तं ॥ समुदायस्येति ॥ नानर्थकेतिपरिभाषात्वत्रैवसूत्रेभाष्येप्रत्याख्याता ॥ शस्येति ॥ आसइतिसमुदा
यात्पूर्वत्वेपीतिशेषः ॥ अदृष्टार्थमिति ॥ यत्तुपाठकेनोक्तं हल्ङ्याबितिसूत्रेहलंतानांसुतिसीनामित्यर्थेहन्यादित्यादौयासुड्विशि
ष्टस्यलोपःस्यादितितन्न ॥ सुतिसीनांतस्मादित्युत्तरस्येतिपरिभाषयाद्यंतत्वकल्पनेननिर्दिश्यमानपरिभाषाप्रवृत्तौदोषाभावात्
व्यत्यादित्यत्रऋदिहीत्यत्रादःसर्वेषामङ्गार्ग्यगालवयोरित्याभ्यामट्नेष्यतएवहल्ग्रहणात् ॥ वस्तुतस्तुगुणोऽपृक्तेइत्यस्यहलादौ

सार्वधातुके इत्यर्थे ऊर्णो। तइत्यत्रापि गुणापत्तेः॥ नचोर्णोतेर्विभाषेत्यस्यवैयर्थ्यमितिवाच्यं॥ सूत्रद्वयस्यविषयव्यवस्थायाएवा
नापत्तेः॥ एवमदः सर्वेषामित्यस्यहलादेः सार्वधातुकस्येत्यर्थापत्तौ अत्तिअत्तामित्यादावडापत्तिः॥ तस्मादपृक्तसंज्ञासूत्रंदृष्टार्थ
मिति॥ द्वेधेति॥ गोबष्कयणीबहुश्रेयसीत्याद्यर्थमिदं॥ रामइत्यादाविति॥ राजेत्यादौतुसंयोगांतलोपेनसिद्धिः॥ यद्वाहल्ङ्या
प्भ्यः किमित्यस्यङ्याब्भ्यामितिकिमर्थमित्यर्थः॥ समुदायद्वाराअवयवप्रश्नेतात्पर्यात्॥ इदितोरित्यर्थइति॥ संज्ञाविधौप्रथमं
तयोरेवोपयोगात्॥ तस्यावयवभिन्नाविदुतावित्युचितं॥ वर्णसंज्ञापक्षेसूत्रार्थमुक्त्वातदंतसंज्ञापक्षेतंवक्तुमाह॥ तदंतेति॥
यज्ञमध्ये॥ ब्रह्मयज्ञमध्ये॥ अतएवासाधुत्वादेव॥ आद्यन्यासेदोषमाह॥ सुपतिनेति॥ द्वितीयेदोषमाह॥ सुसख्येति॥ इदमुप
लक्षणं॥ पतिसुतान्वयानित्यादौद्वंद्वेद्व्यचीतिपूर्वनिपातोपिपूर्वन्यासेनस्ति च्येत्॥ उत्तरन्यासेचबहुसखिशब्दे घित्वंनस्यादित्यपि
बोध्यं॥ भाष्येस्पष्टत्वादिति॥ तथाचभाष्यं॥ बहुष्वितिवक्तव्यं॥ इहमाभूत्कियान्नवक्तव्यं किमेतत्परिप्रश्नेवर्ततेपरिप्र
श्नश्चानिर्ज्ञाते॥ अनिर्ज्ञातंचबहुषु॥ द्व्येकयोः पुनर्निर्ज्ञातं॥ निर्ज्ञातत्वात्द्व्येकयोः परिप्रश्नोनपरिप्रश्नाभावात्किमेवतान्ना
स्ति॥ कुतः प्रत्ययइति॥ स्वतंत्रास्तुकिमः प्रश्नार्थकत्वात्प्रश्नस्यचसंशयपूर्वकत्वात्संशयस्यचतत्तत्धर्मावधिकविषयको

कि॰
८९

टिकत्वात्तत्रैकत्वद्वित्वयोरिवत्रित्वादीनामपिपरिस्फुरणात्द्वित्राइत्यादाविवस्वौजसितिति विधिसूत्रगतंपरत्वमादायब
हुवचनं॥तथाचकतिपुत्राइतिप्रश्नेद्वौपुत्रावित्युत्तरंलोकेकुर्वंतीत्याहुः॥बहुगण॥नहिषादंतेति॥इदमुपलक्षणं॥त्यंतप
र्युदासोप्यत्रज्ञापकः॥यत्तुपाठकेनोक्तं॥त्यंतपर्युदासोनज्ञापकः कतिव्यावृत्याचरितार्थत्वादितितत्तुच्छं॥भाष्यकृतात्यं
तपर्युदासेऽर्थवतस्तिशब्दस्यग्रहणमित्युक्तत्वेनविंशतिशब्दएवत्यंतपर्युदासप्रवृत्तेः॥कतिशब्दात्तुकनिष्टएव॥स्पष्टंचेदं
भाष्येइति॥तथाचभाष्यं॥अथवामहतीयंसंज्ञाक्रियतेतत्करणेएतत्प्रयोजनं॥अन्वर्थसंज्ञायथाविज्ञायेत॥संख्यायतेनये
तिसंख्या॥एकादिकयाचापिसंख्यायतइति॥ननुमहासंज्ञाकरणेनतदर्थानुगुणांसंज्ञित्वंकल्प्यतांप्रदेशेषुलोकप्रसित्थार्थाव
गतिस्तुकुतइतिचेन्न॥तदर्थाननुगुणानांवक्ष्यमाणप्रकारेणसंज्ञित्वव्यावृत्तिसंभवात्॥नियतविषयपरिछेदहेतुत्वा भावेनव
गतिस्तुकुतइतिचेन्न॥तदर्थाननुगुणानांवक्ष्यमाणप्रकारेणसंज्ञित्वव्यावृत्तिसंभवात्॥एतन्न्यायोपयोगः॥कृत्रि
क्त्वादीनामन्वर्थसंज्ञाननुगुण्याच्चागत्यामहासंज्ञाकरणेनप्रदेशेषुलोकप्रसित्थार्थावगतेःकल्पनात्॥एतन्न्यायोपयोगः॥कृत्रि
माकृत्रिमन्यायोपयोगः॥अभ्यासाम्रेडितेति॥तत्रमहासंज्ञाकरणेपिनलोकप्रसित्थार्थस्यग्रहणंऐच्छिकद्विःप्रयोगेपिअभ्यासा
दिकार्यापत्तेः॥ननुसंख्यापदेनलोकप्रसित्थार्थग्रहणेसूत्रेबहुगणयोर्ग्रहणंव्यर्थम्तयोरपिसंख्यावाचित्वादित्याशंक्याह॥सूत्रे

इति॥अतएव॥बहुत्वादेः संख्यात्वाभावादेव॥इदमुपलक्षणं॥बह्वादीनां ग्रहणं शक्यमकर्तुं ज्ञापकात्सिद्धमिति भाष्यस्य बह्वा
दीनां संख्यावाचकत्वे तु ज्ञापकवैयर्थ्यम्॥ननु बहुत्वादेः संख्यात्वाभावे एकादिकया चापि संख्यायत इति भाष्यविरोधः॥तत्रापि
शब्देन बह्वादीनामपि ग्रहणादित्याशंक्य समाधत्ते॥यत्त्वित्यादिना॥स्वव्याप्येति॥तथा च स्वव्याप्यत्रित्वादिद्वारा बह्वादीनां संख्या
र्थकत्वेपि साक्षात्तदभाव इति भावः॥कैय्यटोक्तं दूषयति॥एतेनेति॥नियतविषयपरिच्छेदहेतुत्वाभावेन बहुत्वादीनामसंख्या
त्वेनेत्यर्थः॥अथवा महतीयं संज्ञा क्रियत इति भाष्यमुपादाय कैयटेनोक्तं॥ननु महत्याः संज्ञायाः करणात्संघवैपुल्यवाचिनो
र्बहुगणयोस्संज्ञा माभूदेकादीनां तु कथं स्यात् नैष दोषः॥संख्येति योगो विभज्यते॥तत्र चान्वर्थसंज्ञानुरूपः सर्वः संज्ञी आक्षिप्य
ते॥ततो बहुगणेत्यादि॥इदं भूयादिव्यावृत्त्यर्थं नियमार्थं व्याख्यायते ऽन्वर्थसंज्ञाश्रयणादेव संघवैपुल्यवाचिनोर्बहुगणयोः संज्ञा
नेति॥ननु महासंज्ञाकरणसामर्थ्याल्लौकिकसंख्याया अपि प्रदेशेषु ग्रहणमित्ययुक्तं॥संघवैपुल्यवाचिनोर्बहुगणयोः संज्ञानि
रासार्थं तत्सार्थक्यादित्याशंक्याह॥संघेति॥यद्वा लोकप्रसिद्धसंख्यावाचित्वस्य बह्वादिष्वभाव इति पूर्वमुक्तत्वेनान्वर्थसंज्ञा
बलेन संघवैपुल्यवाचिनोर्बहुगणयोर्व्यावृत्तिरिति वक्तुमशक्यं॥एवं पतिशब्दोपि इत्यं तत्त्वेन संज्ञिकोटौ निविष्टो नत्ववच्छेदक इ

कि० त्याशंक्याह॥संघेत्यादिनेत्पलमित्यंतेन॥पतयेइति।संख्यापदानुवृत्तिरप्युणादीनांव्युत्पत्तिपक्षस्यज्ञापिका॥अतोनसंकरइति
९० वस्तुतस्त्वनेकसंज्ञाकरणसामर्थ्यादाकडारीयत्वाभावेपिनासांसंज्ञानांसमावेशः॥लोपसंज्ञात्वासांविषयेप्रवर्ततएव॥वाध
काभावात्॥नह्येताविवलोपसंज्ञाप्रत्ययदर्शनमुद्दिश्यविहिताकिंत्वादर्शनमात्रं॥एकसंज्ञोद्देश्यकानेकसंज्ञानांतुपृथक्संज्ञा
करणसामर्थ्यान्नयुक्तःसमावेशः॥नलुमतेतिनिषेधारंभाच्चलोपसंज्ञैवतासांविषयेप्रवर्तते॥ननुयथालोपसंज्ञाएतासांविष
येप्रवर्त्ततेतथैताअपिलोपसंज्ञाविषयेप्रवर्तेरन्॥तथाचागोमतीगोमतीसंपन्नागोमतीभूतेत्यत्रच्वेर्लोपेतत्रलुक्तत्धितलु
कीतिङीपोलुक्प्रसज्येत॥छिदभिदित्यादौश्लाविति द्वित्वंप्रसज्येत॥च्वेःक्विपश्चादर्शनस्यलुक्श्लुसंज्ञाप्रवृत्तेः॥वेरपृक्तस्येति
लोपेप्रत्ययत्वव्याप्यधर्मपुरस्कारेणैवप्रत्ययस्योपपादनादितिचेन्न॥पृथक्संज्ञात्रयविधानसामर्थ्येनासांस्वभिन्नसंज्ञासामा
न्यविषयेऽप्रवृत्तिकल्पनात्॥लोपसंज्ञायास्त्वासांविषयेप्रवृत्तिरुपपादितैव॥अतएवप्रत्ययादर्शनंतुलुमत्संज्ञाप्राप्नोति॥तत्र
कोदोषः॥तत्रलुकिश्लुविधिप्रतिषेधः॥नवापृथक्संज्ञाकरणात्॥यथैवतर्हिअदर्शनसामान्येलोपसंज्ञालुमत्संज्ञाअपिलोपसं
ज्ञाअवगाहेरन्॥तत्रकोदोषः॥गोमतीत्यत्रलुक्तत्धितलुकीतिङीपोलुक्प्रसज्येत॥ननुचात्रापिनवापृथक्संज्ञाकरणादित्येव

सित्थं॥ यथैवंतर्हि पृथक्संज्ञाकरणसामर्थ्याल्लुमत्संज्ञामपिलोपसंज्ञानावगाहते॥ एवंलोपसंज्ञापिलुमत्संज्ञानावगाहते॥ तत्र
स एव दोषः॥ लुक्युपसंख्या नमित्यादिभाष्योक्तंसंगच्छते॥ नवा पृथक्संज्ञाकरणादिति भाष्यस्यतद्भावितसंज्ञाभिप्रायकत्वे
तु गोमतीत्यत्रलुक्तद्धितलुकीतिलुगापादनपरभाष्यंयथैवंतर्हीत्यादितदुत्तरभाष्यंचासंगतंस्यात्॥ तद्भावितसंज्ञाश्रयणेगोर
वंच॥ विहितविशेषणमिति॥ अत्रवदंति॥ एवंसतिपरमकतीत्यत्रषड्भ्योलुगितिलुगनापत्तिः॥ इत्यंतस्यषट्संज्ञाविधानात्॥
नचायंसमासएवदुर्लभः दिक्संख्येसंज्ञायामितिनियमादितिवाच्यम्॥ दिक्संख्येसमानाधिकरणविशेषणत्वेनोपादायप्रव
र्तमानसमाससंज्ञाया एवतेननियमेनव्यावृत्तेः॥ अतएवसर्वादिसूत्रेपरमपंचेतिप्रयुक्तंभाष्ये॥ नचबहुगणइतिचेत्यनयोर्द्वि
त्तदंतविधिः॥ अति कतयइत्यत्रापिषट्संज्ञायांलुगापत्तेः॥ त्वक्रादीनामसंख्यात्वस्यतयास्वीकृतत्वेनान्वर्थसंज्ञाबलेनसं
ख्याषट्संज्ञयोरुक्तस्यलेवारणसंभवादिति॥ आध्वीयेति॥ आङोयमहनइत्यात्मनेपदं विधिलिङुत्तमपुरुषैकवचनेइट्ग
महनेत्युपधालोपःसीयुटःसकारस्यप्रत्ययावयवस्यलोपेप्रत्ययलक्षणेनझलादिप्रत्ययपरत्वे नानुनासिकलोपवारणाय
घप्रत्ययग्रहणंतस्मिंस्तुसतिक्तेक्तप्रत्ययलोपएवतत्प्रवृत्तेर्नदोषः॥ चरितार्थमिति॥ प्रत्ययावयवेप्रत्ययत्वस्वीकाराभावेतुप्र

वि॰ त्ययरूपसराभावेनषत्वाप्रवृत्तौसातिग्रहणंव्यर्थंस्यात्॥ननुप्रत्ययरूपसकारस्यकुत्राप्यसंभवएवकुतोनोक्तः॥अवैषीदि
९१ त्यादौआदेशरूपत्वेनैवषत्वसित्येरितिचेन्न॥इंद्रोमावक्षत्सदेवायक्षदित्यत्रवहियजिभ्यांलेटिसिपिप्रत्ययरूपसकारसं
भवादिहापीतिभाष्यं॥तदाहेति॥अतिदिश्यमानकार्याणामुत्पत्तिदेशएवदेशइत्येतत्क्रमेयमेवेत्यर्थः॥प्रत्ययलोपइति॥गुणेप्रा
प्तेइतिवक्तव्येजसिचेतिगुणेप्राप्तइत्युक्त्यैतल्लब्धं॥नलुमतांगस्य॥लुप्तप्रत्ययपरतोयःपूर्वइत्यस्यफलमाह॥तेनपंचेत्यादा
विति॥वार्तिकमतेनैतत्सूत्रोदाहरणमाह॥राजपुरुषादाविति॥सर्वमतसाधारण्येनैतत्सूत्रोदाहरणंतुकारीत्यादि॥लब्धांगसं
ज्ञकइत्यस्यप्रयोजनमाह॥अंगसंज्ञात्विति॥अन्यथांतरंगानपीतिन्यायेनांगसंज्ञातःपूर्वंलुक्प्रवृत्तौयथोद्देशेपिसानस्यादिति
भावः॥अतएवेति॥अंगसंज्ञायाउक्तरीत्यानलुमतेतिनिषेधाप्रवृत्तेरेवेत्यर्थः॥स्त्रीप्रत्ययलुकीति॥इदमुपलक्षणंतथाहि॥इदं
स्त्रियांचेत्यत्रस्त्रीईइतिप्रश्लिष्यईकारेपरतःस्त्रियांतृज्वद्भावः॥अतएवज्ञापकात्तुनेतान्ङीषितिभाष्योक्तपक्षांतराभिप्रायेणायं
ग्रंथः॥आहोस्वित्स्त्रियांक्रोष्टोरंगस्यतृज्वद्भावइतिपक्षांतराभिप्रायेण नाद्यः॥स्त्रीप्रत्ययलुकिप्रत्ययलक्षणेनईकारपरकत्व
स्यनलुमतेतिनिषेधेजागरूकेसत्यसंभवेनतत्पक्षेपिचक्रोष्ट्रीइतिरूपस्यैवदुर्लभत्वात्॥नांत्यः॥तत्पक्षेतृज्वत्वप्रवृत्तेः॥पूर्वं

स्त्रीप्रत्ययस्यैवाभावेनतल्लुकःखपुष्पगंधायमानत्वात्॥तस्मात्पंचभिःक्रोष्ट्रीभिःक्रीतंकुलमित्यर्थेठकितस्याध्यर्धेतिलुकि
पंचक्रोष्टुइत्यत्रतृज्वत्वमितिवक्तुंयुक्तं॥वस्तुतस्तुपंचभिःक्रोष्ट्रीभिः॥क्रीतंकुलमित्यर्थेठकःपूर्वंतृज्वत्वविनाशकत्वाभा
वेनेतिवक्तुंयुक्तं॥अंतरंगत्वात्॥अंगसंज्ञायालुगुत्तरमपिप्रत्ययलक्षणेनप्रवृत्यालुकोंऽतरंगतृज्वत्वाविनाशकत्वाभा वे
नांतरंगानपीतिन्यायाप्रवृत्तेः॥अंगस्यक्रोष्टुरिति॥अंगस्यावयवोयःक्रोष्टुशब्दइत्यर्थः॥अंग संज्ञाचभवतिप्रत्ययलक्ष
णेनेति॥नन्विदंभाष्यंपंचभिःक्रोष्ट्रीभिःक्रीतैरर्थैःपंचभिरर्थै रित्युदाहरणंप्रवृत्तंतत्रचश्रूयमाणभिसमाश्रित्यांगसंज्ञाभविष्य
तीतिनप्रत्ययलक्षणोपयोगइतिचेन्न॥तस्यपंचक्रोष्टुइत्युदाहरणोपलक्षणेनादोषात्॥तथाचोक्तदिशांतरंगत्वेनतृज्व
त्वस्यसमाससंज्ञातःपूर्वमेवतृज्वत्वप्रवृत्यानप्रत्ययलक्षणोपयोगइतिवाच्यं॥अंगसंज्ञातुभवतीतिभाष्यस्यलुकोंतरं
गनिमित्तविनाशकत्वाभावसंपादनार्थत्वेनादोषात्॥नियमतइति॥नन्वेवंतृज्वत्वस्यापिपरनिमित्तकत्वेनतस्मिन्न
लुमतेतिनिषेधप्रवृत्यापत्तिरितिचेन्न॥नलुमतेतिनिषेधेव्याख्यानेनशब्दतःपरनिमित्तकत्वस्यैवाश्रयणात्॥अतएव
वेति॥अदित्यत्रशब्दतःपरनिमित्तकत्वानाश्रयणेनलुमतेतिनिषेधाप्रवृत्तेरेवेत्यर्थः॥इदमयुक्तम्॥अत्वप्रवृत्तावपि

गुणोयङ्लुकोरितिनिषेधेनेष्टसिद्धेः॥ यत्तुचर्करीत्यजर्घाइत्यादौतयोस्तिप्निमित्तकांगत्वमादायात्वप्रवृत्तिरितिपाठके
नोक्तंतन्न॥अंगाधिकारस्याभ्यासकार्याणामभ्यासांगोभयनिमित्तप्रत्ययएवप्रवृत्तेः॥अतएवजिह्ननीषिषतीत्यादौनकु
त्वं॥कार्यकाल त्वस्याभावाच्चेति॥इदमयुक्तं॥कार्यकालंसंज्ञापरिभाषंभस्येत्युपस्थितमिदंभवतियचिभमित्याद्यनेकभा
ष्यविरोधात्॥कैयटोक्तंदूषयति॥एतेनेति॥आकडारस्य स्यकार्यकाल त्वाभावेनप्रत्ययइत्यस्यावृत्तिंविनैवोक्तदिशानिर्वा
हेणचेत्यर्थः॥पदैकवाक्यतयेति॥यत्रांगमितिश्रूयतेतत्रयस्मात्प्रत्ययइत्युपतिष्ठतेइतिसूत्रार्थाश्रयणात्॥अस्मिन्पक्षेच
प्रत्ययइत्यस्यावृत्तिर्नापेक्षिता॥अंगाक्षिप्तप्रत्ययनिमित्तमिति॥नलुमतेतिनिषेधस्तुअनाक्षिप्तप्रत्ययनिमित्तकार्यएवेति
चर्करीत्यादावत्वप्रवृत्तिरितिभावः॥अनङ्गपत्याचिंत्यमिति॥इदंचविशेषणत यावर्णाश्रयणेप्रत्ययलक्षणंनभवतीतिवार्ति
कमतेनदूषणंनवस्तुतः॥अपास्तमिति॥वस्तुतस्त्वाकडारीयेष्वपिकार्यकालपक्षस्योपपादितत्वात्कैयटोक्तमपियुक्तं।आ
वृत्तिरप्यावश्यकीअंगसंज्ञायामुप क्षीणायाःपरबुत्धेरंगसंज्ञायामुपक्षीण त्वेनोरदत्वस्यप्रत्ययनिमित्तत्वात्॥कुलालपितु
र्घटंप्रतीवब्राह्मणस्यपुत्रंपंथानंपृच्छतीत्यादौब्राह्मणस्यप्रश्नक्रियांप्रतीवान्यथासित्धत्वात्॥स्वमोर्नपुंसकादितिसूत्रेइति।ए

तत्सूत्रोत्तरवर्तिनीनेतराच्छंदसीतिसूत्रेइत्यर्थः॥पदांतरसन्निधानंविनेति॥वस्तुतोऽलिंगेयुष्मदस्मदीत्यस्यटाबभावोपपा
दनार्थप्रवृत्तत्वेनेदृशार्थकत्वंनयुक्तं॥नचाटास्यतइत्यादौपदांतरसंनिधानंविनास्त्रियांवर्त्तमानेटाबित्यर्थइतिवाच्यं॥मा
नाभावात्॥नषडित्यत्रषटूग्रहणवैयर्थ्यापत्तेश्च॥तस्मादलिंगेयुष्मदस्मदीतिवार्तिककस्यचिदृषेर्मतमाश्रित्यप्रवृत्तमि
तिबोध्यं॥उच्चारणार्थत्वशंकावारणायेति॥इदमयुक्तं॥त्रयोदशेत्यादौसांतादेशविधायकेत्रेस्त्रयइत्यादाविवात्रापिसांत
त्वभ्रमवारणसंभवात्॥अभ्युच्चयायेति॥भवामीतिप्रत्युदाहरणस्यापिनिर्दुष्टत्वादितिभावः॥केचित्तुनुमः पूर्वपरत्वात्तत्पदा
द्यत्वेपश्चादुगिदचामितिनुमिसर्वनामस्थानेचेतिदीर्घेभवानितिसिध्यतीत्याहुः॥तन्न॥नलोपापत्तेः॥झलंतानामेवोगितां
नुम्विधानाच्च॥अंन्यथाघिनुणिनुमापत्तेः॥अपरेतुइदंजातिपक्षे॥व्यक्तिपक्षेत्वत्वसंतस्येतिसूत्रेऽस्याप्पतोनुपस्थितिसाम
र्थ्यात्तेोनत्यदादीनामइत्यस्यप्राप्तिरितिशंकास्यात्॥अतोभवंतावित्यपास्तमित्याहुः॥इतिइदंताः॥इदंतेभ्यइ ते।वातप्रपूर्वा
त्माधातोःक्विपोनभिधानमित्यर्थः॥वातप्रमीशब्दादाचारक्विबंतात्कर्त्तरिक्विबित्यन्ये॥मृगाकृतिरिति॥हरिणाकृतिःयूल्या
रव्यौ॥दीर्घाज्जसिचेतिनिषेधमाशंक्याह॥वाछंदसीति॥मूलविभुजादिभ्यइति॥आतोनुपसर्गेकइत्यनेनतुन॥उपसर्गत्वात्अ

वि॰ तएवयस्मिन्दशसहस्राणिपुत्रेजातेगवांददौ॥ब्राह्मणेभ्यः क्रियाख्येभ्यः सोयमुंछेनजीवतीतिसित्थं॥प्राधान्येनतद्बोधकत्वनि
६३ वेशेइति॥नन्वेवंकुमारीवर्षाभूशब्देनदीसंज्ञादुर्वारा॥विशेषणतयानित्यस्त्रीलिंगार्थबोधकत्वादितिचेत्सत्यं॥अवयवस्त्रीवि
षयत्वात्सित्थमितिवार्त्तिकस्ययथोद्देशपक्षाभिप्रायेणप्रवृत्तेः॥तथाचावयवस्त्रीविषयत्वात्सित्थमितिभाष्यमुपादायकैयटे
नोक्तं॥अंतरंगत्वात्पूर्वरूपमेवस्म्याख्यत्वात्प्रवृत्तानदीसंज्ञापश्चादुपजायमानेलिंगांतरयोगेननिवर्त्ततइति॥आकरस्येत्या
रभ्यकेषांचिन्मतं॥कार्यकालत्वाभावादित्युत्तरंअवयवस्त्रीविषयत्वात्सित्थमित्येतद्यथोद्देशपक्षाभिप्रायकमेवेतिशेषः॥कथ
मिति॥पौर्वापर्याद्यभावादितिशेषः॥भाष्येस्पष्टमिति॥वस्तुतोनैवंभाष्यकृतोक्तं॥किंत्वंबार्थानांह्रस्वः॥नदीह्रस्वयोर्न्यासेजसि
चेतिनद्याअपिगुणः प्राप्नोतीत्याशंक्यैवंतर्हियोगविभागः करिष्यतेततोह्रस्वोंबार्थनद्योरितिवर्त्तते॥अनयोर्ह्रस्वस्यह्रस्वोभव
ति॥किमर्थमिदंगुणोभविष्यतितद्बाधनार्थंततोगुणश्चगुणोभवतिह्रस्वस्येति॥अथवाह्रस्वस्यगुणइत्यत्रांबार्थनद्योर्ह्रस्वइत्येत
दनुवर्त्ततइत्युक्तं॥वक्तुमशक्यइति॥अंबार्थनद्योर्गुणइतिन्यासेनेत्यर्थः॥गुणःस्यादेवेति॥अनित्यस्थलेलक्ष्यैकचक्षुष्कता
याआवश्यकत्वेननलुमतांगस्येत्यस्याप्रवृत्तौबीजाभावान्नदीसाहचर्यात्स्त्रीलिंगस्यैवांबार्थस्यग्रहणाद्नःशब्देगुणप्राप्तेरभा

वाच्येतिमैोनिश्रीकृष्णभट्टाः॥अयंह्रस्वइति॥विधानसामर्थ्यलभ्योभाष्योक्तयोगविभागलभ्योवाह्रस्वइत्यर्थः॥वृध्धिवारणायेति
नचांतरंगायांवृत्तौबहिरंगस्येोत्वस्यासित्धत्वं॥नाजानंतर्यइतिनिषेधात्॥पररूपंबाधकमिति॥नचाद्विधानसामर्थ्यं॥डेन्न
मिनुड्बाधनार्थंचरितार्थत्वात्॥यत्वेवंसतिह्रस्वनद्यापोनुडित्यस्यानंतरंडेःनेत्येवब्रूयादितिमैोनिश्रीकृष्णभट्टाः॥तन्न॥षट्त्रि
चतुर्भ्यश्चेत्युत्तरसूत्रेषुनेत्यस्यानुवृत्तिप्रसंगात्॥ननुह्रस्वनद्यापइतिसूत्रेआडेःरितिपाठ्यं॥अथवाडेःराम्उकारानुबंधवि
शिष्टःकार्यः॥तथाचैवंलघुन्यासेनसित्धेऽड्विधानंपररूपबाधनार्थमितिचेन्न॥सर्वाशब्दात्ङःस्यटिपररूपेपितस्यपूर्वस्मा
द्विधेोस्यानिवत्त्वेनस्यात्यादित्युत्वाप्रवृत्यर्थंअड्विधानंस्यादित्याशयात्॥अतएवेति॥अनवकाशत्वेनबाधे. पवादप्रवृत्युत्तरमु
त्सर्गप्रवृत्तेरेवेत्यर्थः॥किंतर्ह्यनवकाशत्वादिति॥अलोंत्यपरिभाषेकवाक्यतयागणेरंत्यस्यअस्येत्वमित्यर्थेऽनवकाशत्वमि
तिभावः॥वस्तुतस्त्वेवमर्थाश्रयणेनानवकाशत्वोपपादनेऽभ्यासविकारेबाध्यबाधकभावोनेतिपरिभाषाश्रयणेपिहलादिःशे
षोनस्यात्॥इत्वस्योक्तरीत्यानिर्विषयत्वापत्तेः॥तस्माद्युगपद्द्वयोरसंभवेऽनवकाशत्वंयथाऽडामोरामःडिद्वचनापहारकत्वेना
गमिनएवासत्वेनयुगपत्तयोःप्रवृत्यसंभवात्॥नुक्दीर्घयोस्तुयुगपत्प्रवृत्यसंभवः॥दीर्घेणसर्वस्यागमिनोनापहारात्॥इत्व

हलादिःशेषयोरपिनयुगपत्संभवः॥एकस्यस्थानिनआदेशद्वयासंभवात्॥प्रक्रियावासनावतांईत्वंहिरूपांतरप्राप्तिः॥लोपःस
र्वथानिवृत्तिरिति॥तथाचलोकेपिब्राह्मणाभोज्यंतांमाठरकौंडिन्यौपरिवेविष्टामितिभोजनपरिवेषणयोर्युगपदसंभवेनस्वप्रवृ
त्तिसमयेभोजनबाधेपिपरिवेषणानंतरंमाठरकौंडिन्ययोर्भोजनंदृश्यते॥हयवरट्सूत्रेचभाष्येनेदानींतौभुंजातेइतिकाल
विशेषप्रदर्शनंचकृतं।च्छ्वोरितिसूत्रेचभाष्येऊठ्ष्टित्वेऊडुत्तरंवलोपउक्तः॥ ॥ऊठ्वलोपयोर्युगपदसंभवादितिदिक्॥ननू
ङ्चगमादीनामितिवार्तिकनिष्पन्नभूशब्दस्यधातुत्वादेवसिद्धेतदुपादानंव्यर्थमतआह॥भूशब्दस्येति॥सुभ्रुवावितिसिद्ध
मिति॥तथाचप्रयुज्यते॥गूढसूचितरहस्यविभेदःसुभ्रुवापरिवृत्तेपरिहासइति॥एवमिवर्णोवर्णातधात्वंतस्यांगस्येत्यर्थात्सु
श्रियावित्यादावियङ्सिद्धिः॥नभवतीत्युक्त्याक्रियान्वयेनप्रसज्यप्रतिषेधशंकांनिराकरोति॥धात्ववयवसंयोगपूर्वभिन्न
इति॥उदियादिति॥उत्पूर्वादीङ्गतावित्यस्मात्क्विपिरूपं॥इत्यर्थेनसिद्धेरिति॥वस्तुतस्तुसंयोगाभिन्नात्संयोगैकदेशात्तद्घटि
तसमुदायाद्वापरस्यसंयोगपूर्वकस्यापियणापत्तेः॥धात्ववयवसंयोगात्परस्यनेत्यर्थेतूदियादित्यादौदोषः॥पर्युदासाभावेनो
क्तार्थालाभादितिपूर्वग्रहणमावश्यकंकिमिति॥पूर्वसूत्रात्च्छ्वोरित्यनुवृत्त्यासिद्धमित्याशयः॥निषेधादिति॥ननुखरकुट्योर्ब्राह्म

ण्येइत्यादौ शाकलं प्राप्नोतीतिचेन्न॥उत्तरपदत्वेतिवार्त्तिकारंभेतत्प्राप्तावपिप्रत्याख्यानपक्षेतदप्रवृत्तेः॥प्रतिपदोक्तत्वादिति॥त
थाचदुर्धियावित्यत्रबहुव्रीहौयण्नेतितदाशयः॥विशिष्टरूपोपादानविषयइतिदिक्समासइतिवत्कतिसमासइतिविशिष्ट
कपोपादानेइत्यर्थः॥इतिविग्रहाभिप्रायेणेति॥प्रकृष्टंध्यायतीतिविग्रहे तु नित्यस्त्रीत्वाभावः॥सत्वभूतार्थकेति॥श्रुत्यधा
त्वर्थविशेषणत्वेतुकर्मकारकत्वमस्त्येवेतिभावः॥सूत्रारंभेपीति॥भयहेतुरितिहेतुपदस्वारस्यात्॥तथाचसत्वारंभेपिष
ष्ठीसमाससंभवान्नोक्तस्यलेयणितिभावः॥अभ्युच्चयेति॥पूर्वपरिहारेऽरुच्यभावादितिभावः॥अनयोरेवनिषेधइतितथा
चसुध्युपास्येनिषेधप्रवृत्तिर्नेतिभावः॥प्रकारांतरमाह॥सुपीतिवेति॥यलोपेसखइति॥यावत्पर्यंतंलोपोव्योरित्यस्यप्रवृत्तिं
संभावनातावत्पर्यंतंवेरपृक्तेतिलोपोनप्रवर्त्तते॥ननुनःक्यइतिनिषेधःदंत्यांतविषयकोनुनास्तिकांत्यविषयोवास्यादित्याशं
क्यासतिबाधकइतिन्यायात्लस्यानुरोधाच्चसामान्यापेक्षइत्याह॥नःक्यइति॥परपदस्याजादेशस्यैवेति॥अपीपचन्निति पंचमी
समासप्रयोजनप्रदर्शनपरभाष्यप्रामाण्यादितिभावः॥अनित्यत्वादिति॥अंतरंगपरिभाषाया अनित्यत्वेनैवनिर्वाहेनाजानंतर्य
परिभाषानाश्रयितव्येतिमतेनेदं॥नन्वल्लोपस्यस्थानिवत्वाद्यणिप्राप्तेक्वौलुप्तंनस्थानिवदित्यसंगतं॥लोपस्यलोपकर्मत्वाभावा

कि० ॥ दित्यत आह ॥ भावे क्त इति ॥ अस्मादेव भाष्यप्रयोगात्क्वचित्सकर्मकेभ्योपि भावे क्तो भवति यत्र प्रयोगस्य न गत्यंतरमिति भावः ॥
९५ ननु नैवं विज्ञायते क्ङिौ लुप्तं न स्थानिवत्कथं तर्हि क्ङिौ विधिं प्रति न स्थानिवदिति न परांतस्तत्रस्थ भाष्यात्क्ङिौ लुप्तं न स्थानिवदि
तिनास्त्येवेत्याशंक्याह ॥ अस्याप्यर्थस्येति ॥ तथा चोक्त भाष्ये सर्वत्र नैवं विज्ञायते क्ङिौ लुप्तं न स्थानिवदिति सर्वत्र क्ङिौ विधिं प्रति न
स्थानिवदिति विज्ञायत इत्यर्थकमिति भावः ॥ परकार्यविषय एवेति ॥ एवं चाभिव्यक्तपदार्था य इति न्यायमूलकं प्रसिद्धेत्थं इ
ति सर्वनामप्रकरणस्थस्वग्रंथविरुद्धं तस्मात्तन्न्यायप्रवृत्त्या वपि विशेषणतयाभिव्यक्तपदार्थकत्वमादायानङ्बोध्यः ॥ क्वि
बंतस्य धातुत्वमिव ॥ इति ईदंताः ॥ प्राधान्याच्चेति ॥ सर्वेषां कार्याणां रूपनिष्पत्त्यर्थत्वादिति भावः ॥ ननु रूपातिदेश एव रादे
शो न स्यात् वर्णसंस्थानविशेषस्यैव रूपत्वेन स्वरस्यारूपत्वात् ॥ अत एव विभिन्नस्वरकयोर्विभिन्नार्थयोर्हरिणीशब्दयोः स
रूपाणामित्येकशेषः इत्याशंक्याह ॥ तच्चेत्यादि ॥ अथ तदाकर्षाभावादिति ॥ यद्यपि स्थाने षष्ठ्यभावेन स्थानेंतरतमपरिभाषा
नोपतिष्ठते तथापि रूपातिदेशस्य फलतः स्थान्यादेशभावपर्यवसायित्वेनोक्तपरिभाषाप्रवृत्तिमभिप्रेत्येदम् ॥ संज्ञाशब्दाना
मिति ॥ इदमुणादिव्युत्पन्नानामित्यनेन पाक्षिकं ॥ यथान्यासइति ॥ ण्वुल्तृचौ अप्रत्त्तृच इति यथान्यासे इत्यर्थः ॥ नियमफलं

चिंत्यमिति॥मातरौपितरावित्यादौनिरनुबंधकत्वेनतृन्तृजंतत्वाभावादेवदीर्घापत्तेरितिभावः॥विशिष्टाभावस्येति॥भ्यामितृ
तीयादिपरत्वेपिशस्यजादिविभक्तिपरत्वेपिक्वचिद्विशेषणाभावेनक्वचिद्विशेष्याभावेनाचादित्वविशिष्टतृतीयादिविभक्तिपर
त्वाभावस्य॥एतेनेति॥उक्तनियमस्यैवनिर्दुष्टत्वेनेत्यर्थः॥तथाचतृज्वत्क्रोष्टुरित्यस्यतृज्वत्सर्वनामपरत्वएवेतिनियमपरत्वे
सर्वनामस्थानेतुन्नंतस्यापिप्रयोगापत्तिः॥आवृत्त्याद्विविधनियमपरत्वेपिक्रोष्टुपुत्रइत्यादौतृजंतस्यप्रयोगापत्तिः॥तृजंतं
सर्वनामस्थानएवेतिनियमेविभक्त्यंतरएवतृजंतप्रयोगवारणात्॥तत्रलक्षणवशेनेत्वप्रवृत्तावपिकिरइत्यस्यानुकरणत्वा
भावात्॥धातोःकार्यमुच्यमानमितिपरिभाषातुकिरश्चपंचभ्यइतिनिर्देशादनित्या॥इतएवनिर्देशादिति॥अनुकार्यानुकरण
योरभेदविवक्षात्वप्रामाणिकीतिभावः॥नवलोपइति॥लोपःशाकल्येत्यनेन॥लोपोव्योरितिलोपस्तुछांदसःपरनिमित्तकत्वेन
बहिरंगश्च॥यद्यपिलोपःशाकेतिलोपस्यपाक्षिकत्वेनापिपरिहरःसुलभस्तथापिपक्षेपिलोपाकरणयोपपत्तितनमित्यदोषः।इ
त्यदंताः॥उक्तोत्तरत्वादिति॥इदमयुक्तं॥विवृतत्वसाम्येनकदाचिद्विवृतस्यलकारसाम्येनकदाचिदीषत्स्पष्टस्येत्याद्युक्तरीत्यै त
द्दोषद्वयावारणात्॥नचधातॄणामित्यत्ररेफद्वयाघटितत्वविवृतरूपधर्मद्वयसाम्येनविवृतएवदीर्घोभविष्यतीतिवाच्यम्॥ त

थासतिहोतृऌकारइत्यत्रापिलकारद्वयाघटितत्वविवृतरूपधर्मद्वयसाम्येनविवृतस्यैवापत्तावीषत्स्पृष्टस्यपक्षेप्यनापत्तेः॥व
स्तुतस्तुगमृनित्यत्रेषत्स्पृष्टस्पर्शांकेवनिर्दला॥तस्यपूर्वसवर्णत्वाभावात्॥गमृणामित्यत्रतुपक्षेईषत्स्पृष्टऌकारइष्यतएव
दृढमानंचिंत्यमिति॥ईदृशानामभिधानेदृढमानंतुइकोयणित्यस्यलाकृतिरित्युदाहरणोपन्यासपरमम्निपुराणंबोध्यं॥एतेन
लाकृतिरित्यस्यानभिधानमितिविवरणग्रंथःप्रत्युक्तः॥ ॥इत्यजंताःपुल्लिंगाः॥ ॥होढःइस्त्विति॥प्रतिपत्तिलाघवा
येतिशेषः॥धुडित्याद्यसित्ध्वेरिति॥झषंतत्वाभावेनभष्भावानापत्तेरितिभावः॥आदिपदेनलीढइत्यादिग्राह्यं॥दादेर्धातोः॥ढत्व
स्यापिविधानार्थमिति॥वाग्रहणंसमुच्चयार्थमितिभावः॥उक्ताशयमौपदेशिकदादित्ववतिलक्षणेत्युक्ताशयं॥अन्यत्रविस्तरइ
ति॥अन्येतुपूर्वत्रनिषेध्यसमर्पकेदादेरित्यस्यौपदेशिकदादित्ववत्तिलक्षणायांधातोरित्युत्तरसूत्रेदादेरित्यनुवृत्तिर्वैयर्थ्यं
अपवादपक्षेपीत्याद्यपिन॥औपदेशिकदादित्ववतोधातुत्वाव्यभिचारेणधातोरित्यस्यवैयर्थ्यापत्तेः॥तस्माद्दादेरित्यस्यौपदेशि
कदादित्ववतिलक्षणायांमानाभावात्॥धातोरित्युत्तरसूत्रेदादेरित्यनुवृत्तिस्त्वधोगित्यत्रपूर्वसूत्रप्राप्तढत्वनिवृत्यर्था॥तथा
हिधातोर्घइत्येतन्मात्रेणधुगित्यादिसित्यौधातोरित्यनुवृत्तिर्वैयधिकरण्येनान्वयेनादादावपिअधोगित्यादौघत्वार्था॥तत्रा

मर्थ्येन चाधोगित्यत्र न पूर्वेण दत्वं॥ धातोरितितु दामलिहशब्दे दत्वाभावार्थं॥ दामलिहमात्मन इच्छतिदामलिह्यतिततः क्विप्
दामलिगित्येव घत्वप्रवृत्ते रेवेत्याहुः॥ इत्यादि [illegible] ति॥ आदि [illegible] मित्यादिपरिग्रहः॥ तत्रहि घत्वे झषस्तथो
तिधत्वसिद्धिः॥ नन्वौपदेशिकप्रायोगिकयोरि [illegible] वत्तोग्रहणेसित्धेदादिग्रहणंव्यर्थमत आह
औपदेशिकेति॥ धातोरितिसूत्रे दादेरित्यनुवृत्तिर्व्यर्था॥ प्रयोगोनास्तीति कृत्वेति॥ औपदेशिकप्रायोगिकयोरौपदेशिकस्य
ग्रहणमितिपरिभाषासत्वेतु लौकिकप्रयोगे सानुबंधकानांप्रयोगोनास्तीति औपदेशिकप्रयोगग्रहणमितिभाष्यासंगतिः॥ उ
क्तपरिभाषयौपदेशिकप्रयोगस्य मुख्यत्वबोधनादितिभावः॥ ननूक्तपरिभाषयौपदेशिकदादित्ववत्तोग्रहणेपिनोक्तभाष्य
विरोधः॥ सानुबंधकग्रहणेष्वित्युक्त्ये [illegible] भाष्यस्य सानुबंधकविषयत्वात् इत्याशंकोक्तभाष्यंसर्वविषयकंनसानुबंधकमात्र
विषयं॥ न्यायस्य सर्वत्रतौल्यादित्याह॥ अनुबंधप्रस्तावादित्यादिना॥ वक्तुंयुक्तमिति॥ वर्षास्थानेआंतरतम्येनभवमेवापच
र्त्यार्थाज्झकारस्य निवृत्तेरितिभावः॥ वस्तुतस्तु मंदोज्झमाचष्टेमधोगित्यादौकुत्वनवृत्त्याप्रयोगेज्झंतासंभवेपिजमडमान
मितिसूत्रस्थभाष्योक्तदिशा प्रातिपदिकसंख्यासाम्यमादायपरत्वादंतरतमपरिभाषांबाधित्वायथासंख्यशास्त्रप्रवृत्तौमर्ध

बित्यादौ भकारापत्तेः॥ अत एव भष् भषंतस्येति नोक्तं॥ स्थान्यादेशनिमित्तानां यथासंख्यविज्ञाने भांतस्य योबशस्तस्य भ इत्यादि
सूत्रार्थपर्यवसाने गर्दभमित्यादौ भष्भावानापत्तेरिति दिक्॥ मूले झलीति निवृत्तमिति॥ न च बुबुधिध्वे इत्यत्र भष्भावनिवृ
त्तये ध्वमो झलीति विशेषणमावश्यकमिति वाच्यं॥ इटो ध्वमोः नवयवत्वेपि भष्भावनिमित्तध्वशब्दान वयवत्वेनैकाच्
ध्वशब्दयोरिटाव्यवधानेनादोषात्॥ तङ्डिति॥ इदमयुक्तं॥ भष्भावे प्रवृत्तेपि झलां जशोंत इति जश्त्वेन पुनरीकारप्रवृ
त्तेः॥ बशः किमिति॥ झलां जशोंत इति सूत्रस्य झल्ग्रहणमत्रैव कृत्वा जस्यैव भष् विधेय इति भावः॥ कारकं प्रतीति॥ भा
वे क्विप्यपि न साध्यत्वमात्रेण भानं धात्वर्थस्येति तत्रापि धातुत्वं न सुलभमिति भावः॥ प्रत्ययनिमित्तकत्वाभावादिति॥ श्रौण
हत्येतत्त्वनिपातनेन साजात्यात्प्रत्ययनिमित्तककार्ये एवास्याः प्रवृत्तिरिति भावः॥ केचित्तु धातुसंशब्दनेन विहितप्रत्ययः
क्विबेव तमाश्रित्यैव धुगित्यत्र घत्वादि प्रत्ययनिमित्तककार्ये एवास्याः प्रवृत्तिरिति तु न॥ अनुदात्तस्य चर्दुपधस्याऽ चिविभाषा
इत्यादौ तदप्रवृत्त्यापत्तेरित्याहुः॥ इक्यणः॥ भाष्यविरोधादिति॥ ननु वकारस्य लृकारोऽप्यंतरतम इति तद्वारणाय यथासंख्य
संबंध आवश्यक इति चेन्न॥ लकाराऽघटितत्वेनांतर्यादुकारस्यैव प्रवृत्तेः॥ अत्र पक्ष इति॥ वर्णसंज्ञापक्ष इत्यर्थः॥ वचनप्रामाण्या

इविष्यतीति॥ अन्येतुवर्णसंज्ञापक्षेनतद्भावितपक्षाश्रयणं॥सूत्रशाटकन्यायेनाप्यपरिहार्यस्यान्योन्याश्रयस्यापत्तेः॥अदुहि
तरामित्यत्रतुयथासंख्यविज्ञानान्नदोषः॥लृकारोपदेशः किमर्थः॥लृकारोपदेशोयदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थइतिक्ल
लृक्सूत्रस्थंभाष्यंतुयथासंख्यशास्त्रप्रवृत्तेरप्युपलक्षणं॥एवंचवकारस्थानेलृकारवारणायोक्तंकुसृष्ट्याश्रयणमपिन॥के
चित्तुसंप्रसारणस्येतिदीर्घारंभसामर्थ्येनसंप्रसारणप्रत्ययनिमित्तकांगावयवस्यैवहलःपरस्यसंप्रसारणांतांगस्यैवहलइति
दीर्घविधानेनादुहितरामित्यत्रनदीर्घः॥संप्रसारणनिमित्तप्रत्ययेवाप्रसिद्धेः॥उक्तार्थाश्रयणफलंतुनिरुतमित्यादौदीर्घाभ
वइत्याहुस्तन्न॥उत्तरपदनिमित्तकसंप्रसारणस्यबहिरंगत्वेनासिद्धत्वात्स्थलइतिदीर्घाप्राप्तेः॥परत्वेनेकोह्रस्वइतिह्रस्वबाध
नार्थत्वाच्च दीर्घस्य द्युभ्यामित्यत्रतुदिवउदितितपरत्वसामर्थ्येनदीर्घबाधः॥भाव्यमानोप्युकारःसवर्णान्गृह्णातीत्यस्यार्थ
स्यापितपरत्वंज्ञापकमस्तु॥एकस्यानेककल्पकत्वेबाधकाभावात्॥वस्तुतोऽऋतउदितितपरत्वंभाव्यमानइतिपरिभाषायाज्ञा
पकं॥द्यूचइत्यस्याभिधानेचिकीर्षकइत्यादिवद्बहिरंगत्वेनासिद्धत्वान्नतपरत्वसामर्थ्येनदीर्घत्वस्यवारणं॥द्युभ्यामित्यत्र
तूत्वदीर्घत्वयोरंतरंगपरत्वद्वाराभ्यांनिमित्तकत्वेननांतरंगबहिरंगभावः॥अक्षद्युरूपइत्यत्रापिनपूर्वरूपं॥अठिपूर्वरूपा

त्परत्वादंतरंगत्वाच्चतस्यहलइतिदीर्घः ल्विधित्वेनस्थानिवत्वेनसंप्रसारणत्वाभावात्॥ यद्वाच्क्षोः शूडित्यत्रह्रस्वेविधातव्येदीर्घ
विधानंच्छ्वो रितिविहितस्योठः संप्रसारणपदेनाग्रहणज्ञापनार्थंतेनाक्षद्यूरुणइत्यत्रनपूर्वरूपमितिदिगित्याहुः॥सोर्लोपेच्यु
कामइत्यत्रसंप्रसारणस्येतिदीर्घोन॥उत्तरपदनिमित्तकेसंप्रसारणेएवतत्प्रवृत्तेः॥नचाक्षद्यूरुणइत्यत्रचरितार्थस्यसंप्रसार
णस्येतिदीर्घविधानस्यसामर्थ्येनहलइतिदीर्घस्यहूतइत्यादौप्रवृत्तिर्नस्यात्पूर्वरूपस्यसंप्रसारणत्वाभावादितिवाच्यं॥पूर्व
रूपस्यसंप्रसारणग्रहणेनग्रहणत्वकल्पनात्॥इतिदिगित्याहुः॥ननुसंप्रसारणासंप्रसारणयोर्जातस्यपूर्वरूपस्यसंप्रसारणा
भावेनपूर्वरूपोत्तरंसंप्रसारणंनस्यादित्याशंक्याह॥नसंप्रसारणइति॥इदमयुक्तं॥अचः परेतिस्थानिवत्वेनपूर्वरूपस्यसंप्रसा
रणत्वात्॥नचैवमिति॥पूर्वरूपोत्तरंवचनप्रामाण्यान्निषेधप्रवृत्तावपिसवर्णदीर्घोत्तरमपितत्प्रवृत्तौमानाभावइतिभावः॥अ
न्यत्रापिण्वुलिति॥णिजंताद्धिचितुप्रष्ठौहइतिरूपंदुर्लभं॥णिचाव्यवधानेनोठोऽप्रवृत्तेः॥तत्रोपदेशाइति॥ त्वशास्त्रवैयर्थ्या
भावादित्यर्थः॥यंविधिंप्रत्युपदेशोऽनर्थकः सविधिर्बाध्यतेयस्यतुविधेर्निमित्तमेवनासौबाध्यतेइतिन्यायादितिभावः॥भाष्येध्व
नितत्वमेवाह॥एवमेवेति॥लोके नप्रत्ययानुत्पत्तेरस्वीकारेएवेत्यर्थः॥अन्येतुविषयभेदेनोत्सर्गापवादभावः॥अचिरादेशस्य

नुडपवादत्वमपिनविषयभेदात्॥ निरूपितंचेदंसविस्तरंत्रिपथगायां॥तथाचोत्सर्गापवादभावाभावेऽनड्वानित्यस्यप्रत्ययल
क्षणसूत्रासत्वेनित्यत्वात्सोर्लोपेनुमोरनापत्यातस्यतत्सूत्रोदाहरणत्वमुपपद्यतएव॥इम्नुम्विधिसामर्थ्येनभूतपूर्वगत्या
प्ययणसंभवेप्यन्यार्थमारब्धव्येपिप्रत्यय लक्षणसूत्रेणैवनिर्वाहउचितइतिभाष्याशयः॥ किंचलोपशास्त्रेणानुत्पत्तेरन्वा
ख्यानेप्युत्सर्गापवादभावस्यावर्जनीयतयाऽमादिविषयेहल्ङ्यादिसूत्रेणप्रत्ययानुत्पत्तेरेवान्वाख्यानमसंभवी॥किंच
हेगौरीत्यादौसन्निपातपरिभाषयासंबुद्धिलोपानापत्तिप्रतिपादकभाष्यासंगतिः॥अपिचणिलोपशास्त्रेणणेरनुत्पत्तेर
न्वाख्यानेनाटिटदित्यादौसणिचूकस्यद्वित्वानापत्तिः॥यदिचद्विर्वचनेचीतिनिषेधाद्द्वित्वेकर्त्तव्येनतदनुत्पत्तिबुद्धिःद्वि
त्वोत्तरंतुतदनुत्पत्तिरितिकथंचिदुच्यतेतर्हिअनड्वानित्यत्राप्यमाबाधात्तत्प्रवृत्तिकालेनतदनुत्पत्तिबुद्धिःपश्चात्तुतथेतिसु
वचं॥अतृणेडितितदुदाहरणंतुभवत्येव॥तृणेढीत्यादौचरितार्थस्येमोहल्ङ्यादिलोपानपवादत्वातइत्याहुः॥तांतस्यवि
धानमिति॥इदमयुक्तं॥तपरस्तत्कालस्येतितत्कालस्यसंज्ञित्वबोधनात्॥सर्वादेशत्वापादनमिति॥बोधकगतमनेका
ल्त्वंबोध्येउपकरोतीत्यभिप्रेत्येदं॥तदभावःफलमित्युक्तमिति॥तित्स्वरितमित्यत्रतित्यदंतिद्बोध्यपरमित्यभिप्रेत्येदं।त

थाचकैयटेनोक्तं॥तिताप्रत्यापितः संज्ञीसंज्ञाधर्मेणकथ्यतइतिअस्तितद्यपदेशआदेशस्येति॥एतेनतपरसूत्रेणाच्मात्र
स्यविधेयत्वात्तत्रानेकाल्त्वतित्वयोरभावादिदमप्ययुक्तमित्यपास्तं॥उच्चारणार्थानामपीतिपाठः॥अनुनासिकपरस्यवेरि
ति॥उच्चारणार्थानांविनै वेत्संज्ञाविवृत्तावनुनासिकपरस्यवेः कुत्राप्यभावेनसूत्रस्यनिर्विषयत्वंस्यादितिभावः॥उच्चारणा
र्थानामित्संज्ञांविनानिवृत्यनिवृत्तिविचारः काकदंतपरिक्षामनुकरोतीतिनात्रास्माभिः सूक्ष्मेक्षिकाकृता॥अतएवसुबुत्पत्ति
रिति॥इक्प्रत्ययांतत्वादेव णौगमिरित्यादीति॥आदिपदेनब्रुवोवचिरित्यादिसंग्रहः॥नोपधालोपइति॥वचिरित्यत्रसंप्रसा
रणमप्येवमेवन॥ऊठनेति॥इदमुतस्तपरत्वंत्वितिपूर्वग्रंथेनविरुद्धं॥ज्ञापितेपिस्व स्मिन्चारितार्थ्यासंभवात्॥ऊठोऽप्रवृत्तौ
व्यंजनस्यस्थानेआंतर्यात्ह्रस्वस्येवप्रवृत्तेः॥दीर्घस्यबहिरंगतयेति॥उत्वदी र्घत्वयोस्तुल्यनिमित्तकत्वेनांतरंगबहिरंगभावो
नयुक्तः॥पदलाघवाभावइति॥षट्त्रिचतुर्भ्योहलादिभ्यः।षट्चतुर्भ्यश्चेत्यनयोश्चतुर्ग्रहणद्वयस्यानुकरणं॥षट्कतीत्यत्रतु
चतुर्ग्रहणंकर्त्तव्यमेव॥कतिकग्रहणे नषडितिस्वरूपग्रहणात्॥रांतस्यषट्संज्ञायांतुपदत्रयमितिपदगौरवमितिभावः॥स
चार्थप्रधानएवेति॥प्रधानाप्रधानयोःप्रधानस्यैवग्रहणमितिन्यायात्परत्वस्यैवेति॥अयधितासंबंधेनशब्दनिष्ठपरत्वस्येत्य

र्थः॥ तत्रसंबंधइति॥ इद्दृशस्थलेद्वयीगतिः॥ अवधित्वंपंचम्यर्थः॥ अवधिता नि रूपकत्वंवा॥ तथाचतत्रसंबंधेअवधित्व
संबंधेतन्निरूपितसंबं धेअवधितानिरूपितसंबंधेचेत्यर्थः॥ परंपरासंबंधेनेति॥ स्वबोधकप्रतियोगित्वसंबंधेनेत्यर्थः॥ गो
णेर्थेनविभक्तिः॥ प्रकृतिप्रत्ययार्थयोः परस्परासंबंधेननान्वयइत्युक्तार्थद्वयेभाष्यंसाधकमाह॥ अतएवगंगायामिति॥ प
रंपरासंबंधेनान्वयेतुगंगापदार्थस्यप्रवाहस्यसमीपवर्त्तितीरनिष्ठत्वसंबंधेनाधारत्वेन्वयसंभवात्॥ स्वरितत्वप्र तिज्ञाश्रय
णंव्यर्थस्यात्॥ एवंगोणेर्थेविभक्त्युत्पत्तावपिबोध्यं॥ इदंभाष्यंगंगापदस्यतीरेलक्षणामनाश्रित्योक्तं॥ ण त्वात्पूर्वमेवेति॥ इ
दंद्वित्वविषयेऽसिद्धंनेतिपूर्वत्रासिद्धमित्यस्यार्थमभिप्रेत्य॥ गस्यैवद्वित्वेइति॥ पूर्वत्रासिद्धमित्यस्यवर्णद्वित्वेप्रवृत्त्यभावे
जश्त्व द्वित्वचर्त्वानामसिद्धत्वात्कुत्वेद्वित्वचर्त्वयोरसिद्धत्वाज्जश्त्वेततश्चर्त्वस्यासिद्धत्वाद्गस्यैवद्वित्वेइत्यर्थः॥ गकारेभलिप
रेइति॥ इदंगस्यैवद्वित्वमितिपूर्वोक्तंचस्वग्रंथविरुद्धं स्वेन पूर्वअवसाने चर्त्वस्यजश्त्वापवादत्वोक्तेः॥ उक्तरीत्यैवेति॥ अव
सानेचर्त्वस्यासिद्धत्वादित्युक्तरीत्यैवेत्यर्थः॥ इत्येवार्थइति॥ द्वित्वभिन्नेपूर्वत्रकर्त्तव्येपरमसिद्धमित्यर्थइतिभावः॥ अन्येतुंपूर्व
त्रासिद्धीयमद्वित्वइदंपदद्वित्वविषयेद्विर्वचनेपरसवर्णत्वंसिद्धंवक्तव्यं॥ उभौसाभ्यासस्येतिवार्तिकसूत्राभ्यांलिंगाभ्यांतेन

कि ऊर्णुनावऔजढदित्यादिसित्वं॥अन्यथापरत्वाण्णत्वढत्वयोस्तदसिद्धिः॥द्वित्वेकृतेद्वित्वाश्रयस्यकार्येकर्त्तव्येऽसित्वत्वंनेत्य
१०० पिनमानाभावात्।अभ्यासेजश्त्वचर्त्वयोरेत्वतुकोरितिवार्तिकाच्च॥अतएवफलिभजिग्रहणंज्ञापकं॥अभ्यासादेशासित्वत्वस्ये
ति॥अतएवहलितिसूत्रेभाष्येउक्तंत्वद्रीत्याद्वित्वाश्रयस्यैत्वजश्त्वासित्वत्वाभावेनज्ञापकोपन्यासवैयर्थ्यम्॥सुपिभूतोद्वि
रुच्यतइतिपाठइतिदिगित्याहुः॥सप्तमीबहुवचनमिति॥नतुप्रत्याहारः॥प्रत्याहारांतर्गतानांसप्तमीबहुवचनभिन्नानांस्वरा
दित्वाभावात्॥एवंचेति॥सप्तमीबहुवचनस्यग्रहणेसित्येइत्यर्थः॥तथाचभ्यामादावप्राप्तविधिसर्गविधिरयंनेतिभावः॥षडि
त्यन्वर्थसंज्ञेति॥षडिवाचरतीतिषट्॥प्राधान्येनसंख्येयबोधकः॥टाप्निषेधानापत्तेरिति॥स्त्रियांयद्यत्प्राप्नोतितन्नेत्यर्थाश्र
यणसामर्थ्येनभूतषट्त्वमादायनिषेधप्रवृत्तेःस्वेनोक्तत्वेनवृतेःप्राक्स्थितषट्त्वमादायनिषेधप्रवृत्तेःसंभवात्॥चिंत्यमे
तत्॥यद्वेत्युक्तंदूषयति॥आकडारसूत्रइति॥षट्भ्यइतिसूत्रविषयइति॥तत्रहिषट्भ्योलुगित्यत्रविहितविशेषणमाश्रितं
त्वद्रीत्याप्रियपंचानामित्यत्रषट्त्वाभावादेव लुगप्रवृत्तौतदाश्रयणेवैयर्थ्य॥इत्युक्तमिति॥ ॐ ॥ प्रधानाप्रधानन्यायेनोप
सर्जनेषट्त्ववारणमशक्यं॥प्रियपंचानामित्यत्रपंचन्शब्दस्यप्राधान्येनसंख्येयबोधकत्वात्॥अन्यथात्रिचतुरोरित्यादावर्थ

वत्परिभाषया प्रधानन्यायेन च प्राधान्येन त्रित्वादिविशिष्टबोधकग्रहणे प्रियतिसेत्यादेतिस्यादेशाद्यनापत्तिरित्युक्तमित्यनेन
ध्वनयति॥ अनभिधानमेवोचितमिति॥ सुध्युपास्येत्यादिप्रयोगानुरोधेन॥ न पदांताः परेणः संतीति भाष्यस्य कार्यभाज इति पूर
णावश्यकत्वे कमल्वृक्षवित्यादिरणो प्रगृह्यत्वस्येति कार्यभाक्त्वमस्त्येवेति भावः॥ यांतास्तु न संतीति॥ एचो यवायाव इति
सौत्रो निर्देश इति भावः॥ अयादेश इत्याद्यभियुक्तप्रयोगाच्चिंत्यमेतदिति केचित्॥ अंगानपेक्षत्वेनेति॥ संज्ञाकृतबहिरंगत्व
स्यानाश्रयणाच्चिंत्यमेतदिति केचित्॥ अंतरंगत्वात्थित्वेऽकजिति॥ अज्ञाताद्यर्थापेक्षत्वेनाकचो बहिरंगत्वमिति कैयटोक्तरी
त्येदं॥ भाष्ये तु परत्वात्थित्वमित्युक्तं॥ ननु यद्यकचः परत्वाद्द्वित्वं तर्हि कादेशोपि परत्वात्ततः प्राप्नोति॥ यद्यंतरंगत्वाद्द्वित्वं कादेशो
प्यंतरंगत्वात्ततः प्राप्नोतीति चेन्न॥ अकच् विधौ तिङश्चेत्युक्त्या समनिमित्तकयोरकच्धिभावयोः परत्वात्थित्वेऽकच्ध्वका
लतने ष्विति ज्ञापकेन सुबुत्पत्त्यनंतरमकजुत्पत्तावप्यकचः प्रातिपदिकमात्रनिमित्तकत्वेनांतरंगत्वादकचि ततः कादेशः॥
अत एव भ्यामादेौ किमष्टेरेव प्रागकच् न तु सुबंतस्य टेः तदेतत्परत्वात्थित्वेऽकजिति हुझल्भ्यो हेरिति सूत्रस्य भाष्येण कादेशः
खल्वपि अवश्यं साकच्कार्यो वक्तव्य इति त्यदादीनामिति सूत्रस्य भाष्येण च सूचितं भवति॥ ननु संनिकृष्टसावितिकुतो

वानानुवर्त्ततइत्याशंक्याह॥साविदमइति॥इदमुपलक्षणं॥यःसावित्युत्तरसूत्रेसुग्रणाच्चेत्यपिबोध्यं॥अदंतत्वाभावादिति॥त
स्यचेत्यनाश्रित्येदं विशिष्टशक्ततयेति॥सत्यन्यस्मिन्पूर्वोनास्ति तत्रादिशब्दस्यसत्यन्यस्मिन्यस्मात्परोनास्तितत्रांत्यशब्द
स्यशक्त्येत्यर्थः॥असहायेइति॥असहायत्वंचात्रमुख्यव्यपदेशनिमित्तरहितत्वं॥तच्चोपगवआभ्यामित्यनयोरस्ति॥सत्य
न्यस्मिन्निति विशेषणस्याभावात्॥तथाचयन्निरूपितमादित्वमंत्यत्वमवयवत्वंवास्वस्यानेयंतदवयवस्वेतरद्वितीयास
मभिव्याहृतमसहायत्वं॥सभासन्नयनेदरिद्राधातोचाकारइत्यनयोर्नासहायत्वं॥तत्समुदायाघटकस्वेतरवर्णसत्वात्॥ह
रीइत्यादौद्विवचननिरूपितमंतत्वंईकारस्यानेयंतदवयवस्वेतरोनकोपीतिअसहाय त्वंसुस्थं॥एवंव्यतिसेइत्यादावपि॥ह
रिष्वित्यादौसोर्नपदत्वं॥यस्माद्विहितस्तदाद्यवयवकत्वस्यतत्तत्सत्वगर्भस्यव्यपदेशिवद्भावालभ्यत्वादेवंप्रचिकीर्ष्यगतइ
त्यादौनायादेशः॥अवयवत्वतद्व्याप्यधर्माणांव्यपदेशिवद्भावलभ्यत्वेपिलघुपूर्वत्वस्यतदलभ्यत्वात्॥अतएवदधीत्यादौ
नयण्॥अच्यरकत्वस्यव्यपदेशिवद्भावालभ्यत्वात्॥केचित्तुमुख्यव्यपदेशाभागघटकत्वमसहायत्वमित्याहुः॥अकोकोरिति
अनाप्यकोनेदमदसोरकोरित्यनयोरित्यर्थः॥नन्वशोऽनुदात्तत्वविधानंव्यर्थं॥आभ्यामित्यादावूङिदंपदादितिविभक्तेरुदात्तत्वेन

शेषनिघातेनाशोऽनुदात्तत्वमित्येरित्याशंक्याह॥अनुदात्तत्वितिशित्वादिति॥अश्विधानसामर्थ्याच्चनिर्दिश्यमानपरि
भाषाऽकचोव्यावर्त्तनायनप्रवर्त्तइतिभावः॥ननुतदादेरित्य स्यविशेष्यतयातदंतविधावनाभ्यामित्यादौसनुट्कस्यादेशाप
त्तेर्निर्दिश्यमानपरिभाषायाअप्रवृत्तेरितिचेन्न॥अकच्व्यावृत्तिफलिकायाएवतस्याअप्रवृत्तिकल्पनात्॥नुट्व्यावर्त्तिका
साप्रवर्त्ततएव॥ननुसंज्ञोपसर्जनयोस्त्यदाद्यत्वाप्रवृत्तावशब्वचनंसार्थकमितिनतत्सामर्थ्य॥तथाचसाकच्केनिर्दिश्यम
नपरिभाषयाऽदेशोनस्यादित्याशंक्याह॥संज्ञोपसर्जनयोरिति॥अन्यार्थापत्तेरिति॥आभ्यामित्यादौदीर्घादिबाधनार्थत्वाप
त्तेरित्यर्थः॥नकारलोपइत्यर्थइति॥इदानींतनमूलपुस्तकेषुनलोपइत्येवपाठः॥पर्युदासइति॥प्रसज्यप्रतिषेधेतुपूर्वजात
प्रातिपदिकत्वस्यापिनिवृत्त्यापत्तिरितिभावः॥ ॰॥ * ॥ ॰॥ * अतएवेति॥सप्तम्यंताद्राजन्शब्दात्क्यचोऽनभिधा
नादेवेत्यर्थः॥नलोपःसुप॥नियमशास्त्राणांविधिमुखेनैवप्रवृत्तिर्ननिषेधमुखेनेत्याह॥अन्यनिवृत्तिफलकेति॥पशुपशाय
मिति॥स्टशेर्यङंतात्प्रत्ययेसंज्ञापूर्वकविधेरनित्यत्वात्टषोदरादित्वाद्वासाधुःगम्यतइत्युक्तमिति॥तेनप्रतिषेधस्याशब्दं
त्वमुक्तंभवति॥तन्मे जंतइतिसूत्रस्येड्विधिराकारलोप स्येतिभाष्यंभोभगोइतिसूत्रस्थंकिंपुनःकारणंसुकारपरस्वोदा

ह्रियतइतिभाष्यंचात्रार्थेगमकंबोध्यं॥प्रतिषेधस्यशाब्दत्वेस्वार्थहानिपरार्थकल्पनयोरापत्तिश्चदोषोबोध्यः॥नचमूलकेनो
पदंशमित्यत्रकृदंतत्वप्रयुक्तप्राप्तस्यसमासग्रहणकृतनियमेनपरत्वाद्बाधोनस्यादितिवाच्यं॥गम्यप्रतिषेधस्यैवपरत्वेनबा
धकत्वसंभवात्॥यत्तुएचइ गितिसूत्रस्थंभाष्यंनानेकेनिवर्त्यंतेपितुअनिकोनिवर्त्यते॥तच्चवार्तिकमुभयप्राप्तौकर्मणी
तिप्रतिषेधेकादिप्रयोगेऽप्रतिषेधइतितदुभयंगम्यमानप्रतिषेधपरं॥नानेनेकोनिवर्त्यतेइत्यस्यनानेनेकोऽपूर्वाविधीयंतइ
त्यर्थः॥अप्राप्तसित्धत्वेति॥परत्रषत्वेपूर्वस्यनलोपस्यासित्धत्वाप्राप्तेरित्यर्थः॥वैरूप्येति॥स्वरविध्यादौनियमार्थत्वंसुप्
विधौतुविध्यर्थत्वमितिवैरूप्येत्यर्थः॥वस्तुतस्तुक्रादिसूत्रवकृत्तत्स्थितइतिसूत्रइवचनियमशास्त्राणांविधिमुखेनप्र
वृत्याशाब्दबोधेनवैरूप्यं॥तस्यपूर्वपदत्वेइति॥एतत्फलंतुद्युलिहावित्यत्रद्वंद्वेघीतिपूर्वनिपातः॥कृतीतिकिमिति॥कृति
परतोविधौनलोपोसित्धइत्येवसित्धेतुग्ग्रहणंचिंत्यप्रयोजनं॥अस्मादेवेति॥एतत्प्रयोजनंचिंत्यं॥वाहऊठ्सूत्रस्योठ्ग्रह
णस्यबहिरंगपरिभाषायांज्ञापकत्वस्यभाष्योक्तस्यासंगतिश्चाकृतितुगेवनेति॥अयंसूत्रतात्पर्यविषयोनियमोनतुशाब्दम
र्यादयालभ्यइतिबोध्यं॥स्पष्टार्थमिति॥अंतग्रहणाभावेवमइत्यस्यषष्ठीत्वसंभावनायांवकारमकारसंबंधीयःसंयोगइत्यर्थः

स्यात्ततश्चवर्जंभासुहरिततृणसोमेभ्यइतिकृतसमासः॥तस्यसुजंभादेःशासादेनिषेधापत्तिरितिकेचित्॥वमादितिन्यासेतुदो
षश्चिंत्यः॥श्रीकृष्णभट्टास्तुयेनविधिस्तदंतस्येत्यस्यानित्यत्वज्ञापकमंतग्रहणमितिसमासप्रत्ययविधौप्रतिषेधइतिसिद्ध
मित्याहुः॥वृत्रहणीइत्याद्यनेकोदाहरणोपन्यसनंवैचित्र्यार्थम्॥नियमशास्त्राणांविधिमुखेनप्रवृत्तेरित्याशंक्याह॥एत
त्फलभूतेइति॥ननुवृत्रहयतीत्यत्राव्यवधानएवस्यान्नद्वाभ्यांव्यवधानेधातकइत्यादावित्याशंक्याह॥इदमिति॥प्रघना
घनइत्यत्रेति॥केचित्त्वभ्यासस्यनिरर्थकत्वान्नात्रणत्वं॥मूर्त्तौघनइतिनिपातउपसर्गयोगेप्रघनइत्यत्रवार्तिकमतेपिप्रा
प्तणत्ववारणाय॥गारैकदेशेप्रघणइतिकृतणत्वनिर्देशास्योपसर्गात्परस्यघनोनस्यणत्वंनेत्यर्थज्ञापकत्वाश्रयणाच्चेत्याहुः
हादेशोष्विति॥अर्थतःकवर्गविशेषणंतत्फलंतुकरणेयोविद्रुष्वित्यनेनहंतेरप्रत्ययेघनादेशोचद्रुघणइत्यत्रपूर्वपदात्संज्ञे
तिणत्वसिद्धिः॥हस्यानिककवर्गाभावात्॥ननुवृत्रघ्नइत्यादौनणत्वं॥नकारमुपजीव्यजातस्यकुत्वस्यतद्विघातकणत्वानि
मित्तत्वादितिचेन्न॥त्रैपादिकेकार्येसन्निपातपरिभाषायाअप्रवृत्तेः॥अत्रचेदंवार्तिकंभाष्यंचमानं॥तेनज ध्नमित्यादौघत्वा
सिद्धिरित्यत्रविस्तरः॥मूलेःनिनस्मिन्निति॥अल्लोपोनः॥अनउदाहरणं॥राज्ञः दध्नः अस्मा॥इनउदाहरणमिन्हन्॥दंडीवा

मी॥असउदाहरणंअत्वसंतस्यचाधातोः॥ सुपयाः सुस्रोताः॥ मनउदाहरणं॥मनः सुशर्मासुप्रथिमा॥अत्रचज्ञापकमत्वसंत
स्येतिसूत्रेऽधातोरिति पर्युदासः॥नसंयोगादितिनिषेधश्च॥असतेर्विचियज्वनोब्राह्मणश्चणिजंताद्विचितस्मिन्नुपपदेऽनि
तेर्विचिनिषेधोसप्लावितिकेचित्॥अलेवानर्थके नेति॥अत्रचज्ञापकं॥नेदमदसोरितिसूत्रेऽदसोग्रहणं॥इतियुवोरनो
कावित्यत्रेति॥इतिशब्देनातिप्रसंगाभावरूपसाध्यांशमात्रंविवक्षितं॥भाष्येनपुंसकस्य झलचइतिसूत्रेयोगविभागेनो
क्तार्थज्ञापनात्॥तत्रैवेति॥असित्धत्वाभावकल्पनेएव॥असाधुत्वंलभ्यतइति॥अविशेषेणप्रवृत्तवार्तिकस्यकनिप्र
त्ययांतविषयकत्वस्यापिकल्पनात्॥मतुप्वन्योर्विधानादित्युत्तत्यनुरोधेनवनिबंतविषयकत्वेतुकन्यंतार्थतदाव
श्यकत्वेनमघोनश्चनशिष्यमित्यसंगतंस्यादितिभावः॥ननुकनिन्प्रत्ययस्यलोकवेदसाधारण्येनविधानादुक्तवार्तिक
स्यकन्यंतविषयकमसंभवीत्याशंक्याह॥तथाचेति॥ननुनिपातितांतोदात्तमादायमघोनइत्यस्यसित्धावपिवनिबंतमा
दाययस्येतिचेतिलोपः स्यादित्याशंक्याह॥छंदसीति॥नाल्लोपेति॥अल्लोपोदृष्टांतार्थः॥अन्नंतत्वाभावादिति॥ननुवल्लसा
दाविवस्थानिवद्भावेनान्नंतत्वंसुलभं॥आनुमानिकस्यान्यादेशभावाश्रयणात्॥स्थानिनिमघवन्शब्देऽन्नंतत्वसत्वात्॥

नचान्नंतत्वविशेषणवैयर्थ्यं॥ युवतीः पश्येत्यादौ संप्रसारणनिवृत्त्यर्थत्वात्॥ न चात्रविभक्तौ लिंगविशिष्टाग्रहणमितिनि
षेधः शंक्यः॥ तदननुसंधानेनैवतत्प्रवृत्तेरिति चेन्न॥ ॥ अनइत्युभयोः शेषइतिभाष्यस्याकारवकारयोरुक्तंकार्यद्वयं॥ अन्संबं
धिनोस्तयोर्बोध्यमितिवाक्यार्थाश्रयणेनादोषात्॥ अन्नंतत्वाभावादितिशेखरग्रंथोनचादेशेकृतेऽन्नंतत्वमस्तीतिकेयटग्रंथश्चा
संगतएव॥ अल्लोपदृष्टांतोप्ययुक्तः॥ अनोऽकारस्यैवलोपविधानेनान्नंतत्वस्यश्रौतमानुमानिकंचस्थानिवत्वमाश्रित्यदुर्लभत्वे
नधीवरीत्यादि वल्लोपवारणस्यसुकरत्वेप्यन्नंतत्वमाश्रित्यप्रवृत्तमानसंप्रसारणस्यदुर्वारत्वात्॥ अथवायुवतीः पश्येत्यादौवि
भक्तौलिंगविशिष्टाग्रहणमितिपरिभाषयासंप्रसारणाभावमभिप्रेत्यानइत्युभयोः शेषइतिभाष्यंप्रवृत्तं॥ एवंचानामित्यर्थेपिनदो
षः॥ विशेषणसामर्थ्येनश्रूयमाणान्नंतत्वविवक्षणात्॥ लिंगविशिष्टाग्रहणादिति॥ इदमुपलक्षणं॥ झलंतस्योगितोग्रहणादित्य
पिबोध्यम्॥ सर्वानुदात्तंस्यादिति॥ नगोश्वन्नित्युदात्तनिवृत्तिस्वरस्यापिनिषेधांगीकारात्इतिभावः॥ सावेकाचइत्यस्यैवनगोश्व
न्नितिनिषेधइत्यभिप्रेत्याह॥ उदात्तनिवृत्तिस्वरेणेति॥ अत्राद्यपक्षएवश्रेयानेवंतर्हिनवयंलक्षणस्यप्रतिषेधंशिष्मः किंतर्हियेनको
नचित्प्राप्तस्यविभक्तिस्वरस्यायंप्रतिषेधइतिअसित्थवत्सूत्रस्यभाष्यविरोधः॥ यदिपुनरयमुदात्तनिवृत्तिस्वरस्यापिप्रतिषेधो

विज्ञायेतनैवंशक्यमितितदुत्तरभाष्यंतुविभक्तिग्रहणमनुवर्त्यस्वरमात्रप्रतिषेधपक्षखंडनपरं॥आद्युदात्तत्वमिष्यतइति॥सावे
काचइतिविभक्तिस्वरस्तुनगोश्वन्नितिप्रतिषिध्यइतिभावः॥इदमयुक्तं॥अल्लोपपक्षेप्युक्तरीत्योदात्तनिवृत्तिस्वराप्रवृत्तोफिषइ
त्यस्यपुनःप्रवृत्त्याश्वुनेत्यस्याद्युदात्तत्वात्॥नचलक्ष्येलक्षणस्येतिन्यायावतारःस्थानिभेदेनसंप्रसारणस्येवफिषइत्यस्यापिपुनःप्र
वृत्तिसंभवात्॥अतएवासिद्धवत्सूत्रेभाष्येऽल्लोपेनवानिवृत्तौपूर्वत्वेनवानिवृत्तौस्वरेविशेषाभावप्रतिपादनंसंगच्छते॥तन्मात्र
निषेधइति॥मात्रशब्दःकार्त्स्न्येसर्वसंप्रसारणनिषेधइत्यर्थः॥पूर्वमिति॥यकारस्यसंप्रसारणप्राप्तेःपूर्वंपूर्वरूपोत्तरंसवर्णदीर्घरू
पैकादेशइत्यर्थः॥नन्वनजःकिमितिप्रश्नेऽनर्वाणयज्ववदितिप्रत्युदाहरणंनोपपद्यतेऽसाविति प्रतिषेधविषयत्वेनप्रयोगविकल
त्वादतआह॥अनइत्यस्येति॥अनर्वन्शब्दोव्यावर्त्यइत्यर्थइति तत्फलंत्वनर्वाणावित्यादीतिभावः॥ननुपरस्मैपदानामित्यादा
विवाकारसमुदायस्यविधेयत्वेऽनेकाल्त्वात्सर्वादेशःस्यादित्याशंक्याह॥विशेष्येति॥भाष्येत्विति॥अष्टनआविभक्ताविति सूत्रेइ
तिशेषः॥एतेनपथिमथीतिसूत्रेएवंभाष्येनोपलभ्यतइतिकस्यचिच्छंकानिरस्ता॥तत्प्राप्तस्येति॥गुणाभेदकत्वप्रयुक्ताप्राप्तिः
प्रश्नेषान्निवार्यतइतिदीक्षितोक्तंदूषयन्मतांतरमाह॥केचित्त्विति॥इदंसर्वमिति॥प्रतिपत्तिलाघवेनतत्पे वोच्चारणेकर्तव्येइत्या

द्भिाष्योक्तमाआदितिप्रश्लेषादितिमूलोक्तं चेत्यर्थः॥ गुणाभेदकत्वेनप्राप्तस्य जातिपक्षेणप्राप्तस्यचेत्यर्थः॥अतएवेति॥गुणाभे
दकत्वप्रयुक्तप्राप्तेरप्यणनणसाधारण्येनाप्रत्ययइत्यनेननिषेधादेवेत्यर्थः॥इत्युक्तमिति॥षण्णांग्रहस्यप्राप्तत्वेनजातिपक्षगुणा
भेदकत्वपक्षयोस्त परसूत्रस्यनियमार्थत्वेनप्रापकत्वासंभवादितिपाठकस्तन्न॥नियमशास्त्राणांविधिमुखेनप्रवृत्तेः॥गुणाभे
दकत्वेनप्राप्नोतीत्यनुत्क्वातपरस्तत्कालस्येतिप्राप्नोतीत्युक्त्यागुणाभेद कत्वेनप्राप्तस्याप्यप्रत्ययइत्यनेननिषेधइतिसूचितंभव
तीत्याशयस्तूचितः॥तथाचतपरस्तत्कालस्येतिप्राप्नोतीतिभाष्यंगुणाअभेदकाइत्यभिप्रायकं॥सर्वत्रसर्वविषयेजातिपक्षप्रयुक्त
प्राप्तेश्चप्रतिषेधकमित्यर्थः॥तत्रेति॥अप्रत्ययइत्यत्रेत्यर्थः॥तदाशयः॥गुणाभेदत्वेनप्राप्नोतीत्यनुत्क्वातपरस्तत्कालस्येतिप्रा
प्नोतीतिवदतोंभाष्यकारस्याशयइत्यर्थः गुणाभेदकजातिपक्षयोरण्ग्रहणस्या भावेनाण्ग्रहणस्य चतत्रसंबंधइत्ययुक्तमि
तिबोध्यं॥अतएवाप्रत्ययइत्यत्राण्ग्रहणासंबंधादेव॥ननुजश्शादिविधौजशत्वजात्याश्रयसर्वजकारग्रहणासिद्धिः॥भाव्यमाने
नेतिनिषेधात्तत्रचाण्ग्रहणसत्वादित्यतआह॥परिभाषायामिति॥पंचानामित्यादाविति॥नन्वेतस्याबाधेंतस्यदेशस्येतिपरिभाष
यासित्येउपधाग्रहणंव्यर्थं॥अतउपधायाणोचङ्युपधायाइत्यादावुपधाग्रहणंनव्यर्थं॥ननं दअचकांक्षदित्यादौवारणार्थत्वा

त्॥अत्रहिनोक्तपरिभाषयानिस्तारः॥अंत्यसदेशानंत्यसदेशयोरेकस्मिन्नस्ये प्राप्त्यभावादितिचेन्न॥पक्ताराविल्याशद्वतोङीति
गुणंबाधित्वादीर्घवारणायोत्तरार्थंतदावश्यकत्वात्॥चतुर्णामिति॥इदंतितऊनामित्यस्योपलक्षणं॥लिंगादिति॥वस्तुतस्तुअस्मान्निर्दे
शान्नतिसृचतसृइतिधर्मिग्राहकमानाच्चनिपातोसन्निपातपरिभाषानप्रवर्त्ततइतितत्वं॥तत्रापिप्रश्लिष्टेति॥ननुप्रश्लिष्टेपिगु
णाभेदकत्वाश्रयणेनप्रश्लेषवैयर्थ्यमित्याशंक्याह॥प्रश्लेषेणेति॥एवमन्यत्रापीति॥आसर्वनाम्नइत्यादे॥ऊङ्इति॥ङित्वमा
देःपरस्येत्यस्यबाधनार्थंअष्टन्शब्दोघृतादित्वादंतोदात्तः॥व्यर्थमेवतदिति॥तथाचात्वस्यवैकल्पिकत्वेनचप्रक्रियालाघवाया
शिविधातव्येउङ्विधानसामर्थ्यात्पूर्वंगुणेततोवृत्यौरूपसिद्धिरितिवाच्यं॥उशिनादिचीतिनि षेधेनपूर्वसवर्णदीर्घस्याप्रवृत्या
ङितस्यतस्माच्छसोनेतिनत्वस्यचप्रवृत्याफलभेदाज्ज्ञापितेपिस्वस्मिन्नचारितार्थ्यमितिभावः॥कार्यकालपक्षइति॥यथोद्देशपक्षे
तुभल्लुपोत्तममितिस्वरेऽल्विधिभिन्नेस्वरेकर्त्तव्येस्थानिवत्वेनषट्त्वंसुलभंषट्त्वस्यसमुदायवृत्तित्वेनाल्वृत्तित्वाभावात्॥भ
विष्यतिकिंचित्कार्यमित्यभिसंधायात्वप्रवृत्तेःपूर्वकार्याभावेपिषट्त्वप्रवृत्तेः॥ननुकार्यकालपक्षेआत्वात्पूर्वकार्याभावेनषट्त्वा
प्रवृत्तावपिपरत्वान्नित्यत्वाच्चभल्लुपोत्तममितिबाधित्वाऽत्वेकृतेस्थानिवद्भावेननांतत्वमाश्रित्यषट्संज्ञाक्रियतइत्याशंक्याह

अल्विधित्वेनेति॥ यथोद्देशपक्षस्यैवेति॥ ननुयथोद्देशपक्षस्यैवाश्रयणेनज्ञापनेपिस्वस्मिनचारितार्थ्यं॥ अष्टन्शब्दस्यन्नः संख्याया
इत्याद्युदात्ततयाऽन्तानुदात्तत्ववारणायाष्टनोदीर्घादित्यस्यशासिप्रवृत्तेरावश्यकतयातत्रझल्युपोत्तममित्यस्याप्राप्त्याचैरितार्थस्या
ष्टनोदीर्घादित्यस्याष्टाभिरित्यादौझल्युपोत्तममित्यनेनपरत्वाद्बाधःस्यादेवेतिचेन्न॥अष्टन्शब्दस्यघृतादित्वेनांतोदात्तत्वात्॥ न
न्वेवमपिदीर्घग्रहणस्यनस्वस्मिन्चारितार्थ्यं॥ स्वरविधौस्थानिवत्वनिषेधेनाष्टाभिरित्यत्रझल्युपोत्तममित्यस्याप्राप्तेरितिचेन्न॥अ
नंतरस्येतिन्यायेनाचःपरस्मिन्नित्यस्यसनिषेधइत्यंगीकारात्॥नन्वेवंसत्यष्टानामित्यत्राष्टनोदीर्घादितिविभक्त्युदात्तत्वंनस्यात्॥
नलोपस्यासिद्धत्वेनाष्टन्शब्दस्यदीर्घातत्वाभावादित्याशंक्याह॥अंतोदात्तत्वंत्विति॥तत्प्रकृतेइति॥नुटिकृतेइत्यर्थः॥तथाचनुट्
दृष्ट्यानलोपस्यासिद्धत्वेननुटोनस्वोपजीव्यविघातकादर्शनमितिसंनिपातपरिभाषायाःप्रवृत्तिरितिनवाच्यमितिभावः॥इदंका
र्यकालपक्षेपिबहिरंगपरिभाषायास्त्रिपाद्यामप्रवृत्तिप्रतिपादकस्वग्रंथविरुद्धं॥ नार्कूटइत्यस्यपूर्वत्रवृत्त्यौकृतायामपिपरस्य
विसर्गस्यासिद्धत्वाश्रयणेनत्रिपाद्यांतदप्रवृत्त्युपपादनात् अंतरंगपरिभाषादृष्ट्याविसर्गासिद्धत्वंतुतत्रपक्षेनत्रिपाद्यांतदप्रवृत्त्यु
पपादकं॥यद्यपीदंतत्रासिद्धंतत्विहसिद्धमितिभाष्योक्तरीत्यातत्रपक्षेऽसिद्धत्वेप्यन्यपरिभाषाणामिवास्याअपिप्रवृत्तेर्दुर्वारत्वा

त्॥अशास्त्रीयत्वेनेति॥राजभ्यामित्यादीनांतत्वस्यादंतत्वाभावस्यवाऽशास्त्रीयस्यदीर्घाप्रवृत्तयेऽतिदेशदर्शनादिदमयुक्तं॥सुबा
दिविधावेवनलोपस्यासित्धत्वेनसन्निपातपरिभाषयानलोपस्या सित्धत्वेननाभावः सुब्विधौकृतेइत्यर्थेतुनमानमितिवक्तुं
युक्तं॥नलोपोवेति॥वाशब्दइवार्थः॥नन्वेवमात्वेहलीत्यस्यापकर्षः॥परत्वान्नित्यत्वाच्चनुटंबाधित्वाऽत्वेनुट्नस्यादिति
तत्प्रवृत्तयेयदिचकृतात्वस्यापिषत्वंतदासव्यर्थइत्याशंक्याह॥कार्यकालपक्षेइति ॥ननुकार्यकालेपिनुडर्थेषट्संज्ञायांत
तःप्राप्तनुटंपरत्वाद्बाधित्वाऽत्वेपिस्थानिवत्वेनषट्त्वमाश्रित्यनुट्सुलभइत्याशंक्याह॥तत्तद्विधीति॥ततश्चनुटमिवषट्त्व
मपिबाधित्वापरत्वादात्वमितिभावः॥ननुलक्ष्यानुरोधेनयथोद्देशपक्षस्यैवाश्रयणेननुट्सित्धौकार्यकालपक्षाश्रयणेनदोषो
द्भावनंतत्परिहारायहलीत्यपकर्षश्चायुक्तइत्याशंक्याह॥दीर्घग्रहणादिति॥प्रतिपत्तिगौरवमिति॥हलीत्यपकर्षापेक्षयेत्यादिः
वस्तुतस्तुयथोद्देशपक्षेषट्त्वस्यस्थानिवद्भावेनसुलभत्वेषट्संज्ञायामुपदेशवचनंकर्त्तव्यं॥तातादयष्टनोनुडर्थेअष्टानामित्यत्रा
त्वेकृतेषट्संज्ञानप्राप्नोत्युपदेशग्रहणाद्भवतीतिभाष्यवार्तिकयोरसंगतिः॥तस्मात्षट्त्वस्यनांतत्वविशिष्टसंख्यावाचकत्वे
नाल्घटितत्वान्नातिदेशसाध्यत्वं॥संज्ञापदस्यतद्विधावुद्देश्यतावच्छेदकरूपेणैवप्रायेणसंज्ञिबोधकत्वात्॥अन्येतुहलीत्यपक

नलोपे तु न सानतिस्त्रितिधर्मिग्राहकमानेन सपादसप्ताध्याय्यामेव तत्प्रवृ
र्त्तेनुटि कृते न आत्वं सन्निपातपरिभाषाविरोधात्॥ नलोपे तु न सानतिस्त्रिति धर्मिग्राहकमानेन सपादसप्ताध्याय्यामेव तत्प्रवृ
त्तेः॥ अत एव जग्ध मित्यादौ घत्वादिः॥ अत एव दोद द्घोरिति सूत्रे भाष्ये दांतत्वे धान्तत्वे च नत्व धत्वे यांतत्वे ऽदोष स्तस्मात्यांत एवेत्युक्तं॥
एवं च हलीत्युभयोः शेष इति प्रतीकमुपादाय नुटि कृते आत्वमिति कैयटग्रंथो शेखरग्रंथश्चासंगत एवेत्याहुः॥ तज्ज्ञाप्यात्वमपिने
ति॥ इदमयुक्तं॥ प्रियाष्टानौ प्रियाष्टान इति न सित्यतिप्रियाष्टानौ प्रियाष्टान इति प्राप्नोतीतिष्णांते तिसूत्रस्थभाष्यविरोधात्॥ तत्र
ह्यात्वं कृत्वौश्नकृतो हलीत्यस्यापकर्षपक्षे प्रियाष्टाभ्यामित्यादाविव प्रियाष्टानामित्यादावप्यात्वप्रवृत्तेः सुलभत्वाच्च॥ अत एव अन
भिधानादेव॥ विशेषणार्थ इति॥ अन्यथानुनासिकस्य क्विझलोरित्यादाविव क्विपोपि ग्रहणापत्तिरिति भावः॥ वस्तुतस्तदनुबंधकग्रहणे
तिपरिभाषायाः क्विपोऽग्रहणे सित्येन कोप्यर्थ एवेति भाष्यकैयटयोः स्पष्टं॥ णिजादीनामिति॥ णिचः कृत्वे देवदत्तेन पाचयतीत्यादौ
कर्तृकर्मणोरिति षष्ठ्यापत्तिः॥ णिचः प्रकृतेः पचेरर्थे देवदत्तस्य कर्तृत्वात्॥ जनजननेड् इत्यस्माण्णि विजनिवध्योरिति वृत्थि निषे
धापत्तिः॥ किंच चेचीयत इत्यादावकृत्सार्वे तिदीर्घानापत्तिः॥ यङं तत्वात्॥ रुरुदिवेति॥ नन्विदमयुक्तमिति चेन्न॥ नेड्वशीत्यत्र
तिङो व्यावर्त्यत्वासंभवेन कृद्ग्रहणसामर्थ्येन कृत्त्वावच्छेदेन क्रादिनियमं बाधित्वाऽस्य प्रवृत्तिविज्ञानादित्याशयात्॥ नेड्वशीत्यस्या

पिक्कादिनियमेनवाधातृरुदिवमित्युचितं॥तत्रहिरुदादिभ्यःसार्वेतीडिष्यते॥क्त्वेतुनेड्वशीतिनिषेधःस्यात्॥ज्ञापकेनेति॥अक्त
त्सार्वधातुकेतिसूत्रेसार्वधातुकग्रहणेनतिङंकृत्संज्ञाभावकल्पनयेतिभावः॥ननुजागृयादित्यत्ररीङोऽप्रवृत्तयेक्रियादित्य
ऋतत्प्रवृत्तयेरिङ्विधावसार्वधातुकग्रहणमात्रस्यानुवृत्त्यर्थंतदितिचेन्न॥एकदेशानुवृत्तौमानाभावेनतत्रापिसमुदायानुवृत्तौ
लिङ्ग्रहणवैयर्थ्यापातेनपर्युदासस्यैवाऽप्रवृत्तेरित्याशयात्॥क्विनोघइति॥यद्यप्यल्पप्राणप्रयत्नसाम्यादितिवक्तुमुचितं॥त
थापिवकारस्यमहाप्राणताक्विनोघइतिवदेदितिकैयटोक्तेस्सिन्यासानुमेयेतिविवरणेस्पष्टं॥इतिमतेइति॥यदात्वन्येभ्योपिदृश्यत
इतिदृशिग्रहणात्क्विब्वचीत्यादिसिद्धमित्युच्यतेतदानेनषत्वमात्रंपदांतेविधीयतेक्विप्दीर्घौत्वन्येभ्योपिदृश्यतइतिबोध्यो
भाष्येध्वनितमिति॥तत्रहिनुगचीतिन्यासेतदोःससावित्यत्रानेषइत्यादौसत्ववारणायतदोरितिनवक्तव्यंतोरित्येवसिद्धेरित्युक्तं
अतएवेति॥शेषग्रहणस्यविभक्तिविशेषणादेव॥एवंचेति॥मपर्यंताच्छेषबोधकत्वाभावेइत्यर्थः॥हलंताएवआदेशाइति॥त
त्रहिभाष्येद्विपर्यंतानामितिवचनप्रत्याख्यानायशेषेलोपइत्यस्यज्ञापकत्वमुक्त्वाटिलोपष्टाबभावार्थइत्यादिनाशेषग्रहणस्यटि
लोपार्थत्वमुक्त्वातत्त्वंडितं॥एवमपितवाद्यादेशानामदंतत्वेवार्णादांगस्यबलीयस्त्वात्पररूपंबाधित्वाशेलोपेयपःप्रसंग

तादवस्थ्यंमनसिकृत्यत्वममादिषुत्वादेशेष्वकारउच्चारणार्थोहलंतात्वत्वादेशाइतिनक्कचित्टापप्रसंगइत्युक्तं॥ननुहलंताआदे
शाइतिपक्षेणिजंतात्क्किपिमांतयोर्हलंतेषुत्वाद्यादेशेषुकृतेषुशेषेलोपेवकारहकारयोर्निवृत्त्यापत्तिरित्याशंक्याह॥णिजंतात्विति
णिचमाश्रित्यतुनप्रत्ययोत्तरपदयोरित्यादेशः॥बहुत्वार्थकाभ्यामेवताभ्यांणिज्विवक्षणात्॥इदमुपलक्षणमिति॥नतुविशेषण
मित्यर्थः॥अत्रैवोक्तत्वेनेति॥त्यदादीनामित्यत्रैवोक्तत्वेनेत्यर्थः॥युष्मभ्यमिति॥संयोगांतलोपस्तुनझल्ग्रहणसंबंधादितिभा
वः॥अतएवेति॥अर्थद्वयस्यव्यवस्थि तत्वादेव॥शेषलोपइत्यस्यार्थद्वयेतात्पर्यमित्यंशाभ्यामादेशोपियुक्तइत्यंशंचदूषयितुमाह॥
वस्तुतइति॥अभ्यमसूत्रेइति॥पूर्वोक्तस्यवस्तुतस्त्वित्यस्यात्रापिसंबंधः॥अंतरंगत्वादिति॥अज्ञाताद्यर्थानपेक्षत्वेनेतिशेषः॥व
स्तुतस्तुपरत्वाद्युवादिषुपश्चादकचीतियुक्तं॥अतएवबहुझल्भ्येतिसूत्रेभाष्येभिंधकीत्यत्रपरत्वात्थिभावेऽकजदित्युक्तं॥युव
काभ्यामिति॥ओकारसकारभकारादावितिननिमित्तकोटिप्रविष्टंकिंत्वोकारसकारभकारभिन्नविभक्तौयुष्मदस्मदोःसुबंतयो
टेःप्रागकजित्येववचनशरीरं॥ इतरविभक्तौत्वर्थात्सुबुत्पत्तेःप्रागेवप्रातिपदिकस्यटेःप्रागकजित्याश्रित्येदं॥अन्यथाभिंधकी
त्यादाविवपरत्वाद्युवयोःपश्चादकचिदोषाभावादसंगतमेतत्स्यात्॥उक्तव्याख्यानेतुविभक्तिनिरपेक्षत्वेनांतरंगत्वात्किमादावि

वयुष्मदस्मदोरप्यादेशात्पूर्वमकचिनिर्दिश्यमानपरिभाषयायुवावौनस्यातामितिदोषःस्पष्टः॥अग्रेकस्यचित्तत्वेएवेति॥अंगुष्ठ
मारभ्यमस्तकांतंकुष्ठइत्येवप्रयोगः॥नतुमस्तकपर्यंतमपीतिभावः॥पदकार्यविषयइति॥सर्वनामप्रकरणेसंज्ञाव्यावृत्तेरभिव्य
क्तपदार्थैतिन्यायेनस्वयमभिधानात्तद्विरुद्धमेतत्।अतस्वेति।आदेशप्रवृत्तेरनिष्टत्वादेवेत्यर्थः।प्रयोगदर्शनमितित्वादेशघटितप्रयोगद
र्शनमित्यर्थः ननुयूयमित्यत्रशीभावस्यप्रत्ययकार्यत्वेनांगकार्यत्वाभावेनोक्तपरिभाषयातद्वारणसंभवइत्याशंक्याह।अंगाधिकारस्यइत्यर्थ
इति॥ननुविशेषणसमासेमकारस्यपूर्वनिपातापत्तिः॥असमासेसंयोगांतलोपाप्रवृत्तौमइत्यस्यश्रवणापत्तिरित्याशंक्याह॥संहित
यापाठेइति॥तथाचमकारद्वयोच्चारणेपिनव्यंजनपरस्येतिन्यायेनैकमकारोच्चारणादविशेषः॥असंहितयापाठेतुव्यंजनपरत्वा
भावेविशेषःस्यादेवेतिभावः॥केचित्तुसंहितयापाठेजातिपक्षाश्रयणेनद्वयोरपिमकारयोरेकएवादेशइतिभावइत्याहुः॥सुटस्त्विति
ननुयदागमन्यायस्यातिदेशरूपत्व पर्यवसानात्त ष्मा प्रकृतसन्निपातविघाताभावेपिवास्तवसंनिपातविघातस्त्वस्त्येवेतिपरिभा
षाप्रवृत्तिर्दुर्वारा॥अतएवक्रन्मेजंतइतिसूत्रेआत्वंपुग्विधेरनिमित्तंस्यात्क्नापयतीत्युक्तमितिचेन्न॥यदागमन्यायस्यातिदेशत्वंने
त्याशयात्॥आत्वंपुकविधेरनिमित्तमित्यपिपूर्वपक्षिभाष्यं॥अतएवाप्रतिविधेयंदोषेष्वितिसित्थांतभाष्यव्याख्यावसरेक्नापय

तीत्याकारांतभक्तः पुक्नव्यवधायकइतिकैयटेनोक्तं॥अन्येतुकृतितुग्ग्रहणंसन्निपातपरिभाषायाअनित्यत्वेगमकं॥ज्ञापयती
त्यादौपुक्सिध्यतिससुट् कनिर्देशोप्यत्रैवगमकांतरं॥ तेनयदागमन्यायस्यातिदेशत्वे प्यवयवावयवस्यसमुदायावयवत्वे
पिग्रामणिकुलंवृत्रहभिः ज्ञापयतीत्यादौसन्निपातपरिभाषोपन्यासपरभाष्यविरोधेनेत्याहुः॥नतदंतस्येति॥यदाचावयवावयवः
समुदायावयवोनेत्यपिपूरणीयं॥त्वद्रीत्येति॥ननुत्वद्रीत्यापियुष्मदस्मदोर्विभक्त्यादेशेषुकृतेषुनलुकः प्राप्तिरतोमित्यमाबाधा
त्प्राप्तिमात्राभिप्रायकत्वेममापितुल्यमितिचेत्सत्यं॥परिभाषाविषयत्वंसूचितमिति॥तुभ्यंमह्यंत्वत्मत्॥तवममेत्यादौस्मेस्मा
त्स्याइत्यनयैवपरिभाषयानेतिबोध्यं॥युष्मदस्मदोर्विभक्त्यादेशेकृतेङि·ह्विभक्तिस्थानिकादेशेकृतेपुनरादेशांतरंनेत्यशिशि
त्वेनज्ञाप्यतइतिकेचित्॥अम्मांतएवावशिष्यतइतिव्याख्यानेतुतुभ्यमित्यादेःसिद्धावपित्वदित्यादेरसिद्धिः॥अतःसन्निपा
तपरिभाषयावारणप्रकार एवयुक्तः॥अंगसंबंधीति॥इदंनयुक्तं॥धर्मिग्राहकमानविरोधात्।अतएवज्यादादीयसइतिसूत्रेभा
ष्यंकिमर्थंजात्परस्येयस आत्वमुत्वमुच्यतेलोपःप्रकृते नुवर्त्यताम कृद्यकारेतिदीर्घोभविष्यति॥एवंतर्हिसिद्धेसतियदात्वंशा
स्तितज्ज्ञापयत्याचार्योभवत्येषापरिभाषांऽगवृत्तेपुनर्वृत्तावविधिरिति॥लोपश्चप्रत्ययसंबंधकार्येणेतिदिक्॥तत्फलंत्विति॥

वि० विभक्तावित्यस्यफलमित्यर्थः॥तन्निवृत्तिश्चे ति॥अस्यवस्तुतइतिशेषः॥पूर्वग्रंथेनैकग्रंथत्वेसांप्रतिकाभावेनभाविन्याग्रहण
१०९ मितिपूर्वग्रंथस्यस्थानिवत्वेनसामत्वमेवनत्वामत्वमित्युत्तरग्रंथस्यविरोधापत्तिः॥स्थानिवत्वेनामत्वाभावेनभाविन्याअपिसका
रप्रसक्तेरसंभवात्॥सामत्वमेवेति॥यद्यपिस्थानिवत्सूत्रेणस्थानितावच्छेदकधर्मातिदेशएवातिदिश्यतइतिननियमः॥आर्धधा
तुकत्वाद्यतिदेशापत्तोनल्पपीत्यादेर्वैयर्थ्यापत्तेः॥तथापिसंभावितमामंविहायसांप्रतिकस्यसामःस्थानिकत्वेनोपादानसामर्थ्येन
सामत्वमेवातिदिश्यतेनत्वामत्वमितिकल्पनान्नदोषः॥प्रत्ययत्वसुप्त्वादीनांतुनव्यावृत्तिः॥आमितिनिर्देशेनप्रसक्तस्थानि
तावच्छेदकभावस्यामत्वस्यैवप्रवृत्तेः। ननुयुष्माकमित्यत्रसामोभावित्वंसंभवतिनत्वतित्वाकमित्यत्र॥तथाह्याकमःस्थानिवत्वे
नामत्वात्सुटःप्रवृत्यासकारस्यश्रूयमाणत्वात्॥अतित्वाकमित्यत्रसुटोप्रवृत्यानसामत्वभावीत्यतआह॥सामत्वस्याशास्त्री
यत्वे नेति॥यद्यपिनिर्जरसावित्यादोजराशब्दवत्आकम्यात्वंअशास्त्रीयत्वेप्यतिदेष्टुंशक्यंसामत्वंतुसुटमादायार्थसमाजग्र
स्तंनातिदेशतोलभ्यं॥तथाप्याकमःसुड्डुत्तरंआमत्वप्रयुक्तशास्त्रीयकार्याभावेनस्थानिवद्भावेनामत्वंदुर्लभंसामत्वस्याशास्त्री
यत्वेनशास्त्रीयकार्यप्रवृत्यप्रयोजकत्वेनातिदेशालभ्यत्वात्॥अतिदेशत्वाप्रयोज्यत्वादितिशेखरार्थः॥किंचयत्रसाम्भावि

तत्राकमित्यर्थे आकमुत्तरं सुटः प्रवृत्तौ तस्य श्रवणापत्तिस्तदेतदभिप्रेत्याह ॥ इति दिगिति ॥ विप्रतिषेधे पूर्वं मिति ॥ अन्ये तु पूर्वेषा
स्वप्रवृत्तिप्रयोजकीभूतो विप्रतिषेधस्तुल्यबलविरोधस्तेनेत्यर्थस्तस्य क्रियाविशेषणत्वाभिप्रा येणाण्यल्लोपावियङ्यण्गु
णवृद्धिदीर्घेभ्यः पूर्वं विप्रतिषेधेनेति वार्तिकप्रयोगः करणत्वविवक्षया च तद्व्याख्यानभाष्ये च विप्रतिषेधेनेति निर्देशः ॥ एवं गुणवृ
द्धि औत्वेत्यत्र नञ्योक्तरीत्या समासे तु पूर्वं विप्रतिषेधत इत्यस्य त्वमावपि प्रबाधंत इत्यनेनान्वयापत्तिः ॥ उक्तभाष्यवार्तिकयोर
नन्वय इत्याहुः ॥ अत एव पदस्येत्यस्य प्रायेणावयवषष्ठीत्वादेव ॥ ननु न लोपसूत्रेऽतग्रहणं मुख्यप्रातिपदिकांतस्य ग्रहणार्थं
तेनन्नः संख्याया इत्यादौ व्यपदेशिवद्भावेन प्रातिपदिकांतस्य नलोपो नेत्याशंक्याह ॥ न्नः संख्याया इति ॥ त्वामयोरिति ॥ अजादि
त्वाद्दाविति भावः ॥ अन्ये तु त्का ल्यप्प्सः शान ज्भौज्त्व श्च्योः क्कि इत्यादिनिर्देशेनातो धातोरित्यत्र धातुपदमनाप्परं तेन
त्वामोरित्युचितं ॥ अजादित्वेन टापकल्पनेन प्रमाणमित्याहुः ॥ नवाक्षरत्वेनेति ॥ तथा च नवाक्षरस्य पादत्वाभावेन पादादिस्थत्व
भावात्पत्योदाहरणासंगतिरिति भावः ॥ वस्तुतो नवाएकाक्षरेण छंदांसि वियतीति ऐतरेयब्राह्मणवचनात् ॥ नवाक्षरत्वेपि पाद
त्वमस्त्येवेति वाच्यं ॥ स्मानित्यस्य चेति ॥ इदमयुक्तं ॥ एवं सति गणेश इत्यादौ ङमुडापत्तेः ॥ तस्मादेवं विषये नैकदेशविकृतन्यायो

 इतिपूर्वंनिरूपितं॥ननुसंध्युत्तरमपादादाविति निषेधप्रवृत्तावपिसंधेःपूर्वंनवाप्तरत्वेनतदप्रवृत्तौआदेशोदुर्वारइत्याशंक्याह
 संधिश्चेति॥इदमयुक्तं॥यत्थित्तपरमितिसूत्रस्यभाष्यकैयटाभ्यांपदद्वयनिमित्तकार्यात्प्रागंतरंगोप्येकादेशोनेतिकल्पनात्॥
संधेःपूर्वमादेशप्रवृत्तिशंकायाः परिहारंमतांतरेणाह॥नःकृष्णेति॥उपजीव्यविरोधादिति॥नात्रसंनिपातपरिभाषाभिप्रेता॥
किंतुयतोनावइत्यत्रद्व्यच्कतामुपजीव्यप्रवृत्तस्वरस्यद्व्यच्कताविघातकत्र्यच्कतासंपादकतानेत्याकरोक्तदिशान्यायंत
रमेतदितिबोध्यं॥इतिपरेइति॥इदमप्ययुक्तम्॥इण्धातौवक्ष्यमाणरीत्योभयतआश्रयणइत्यस्याभावेप्यंतादिवद्भावेन
व्यपवर्गस्यालाभादेवैनैकादशे कृतेपदात्परास्मच्छब्दाभावादेकवचनेनविग्रहेप्रत्ययोत्तरपदयोरित्यादेशमाशंक्याह॥युवयोरि
ति॥नतुद्वित्वादेर्नाप्येकत्वस्यभानंकिंतुसंबोध्यत्वेनैवानेकव्यक्त्यवगतिरितित्वमौनकृताविति योजनातथाचसंख्यानवगति
रितिभाष्यस्यविशेषरूपेणसंख्यानवगमइत्यर्थइतिनकश्चिद्दोषः॥पचतीत्येतन्मात्रस्येति॥एतस्यवाक्यत्वेऽनंत्यस्यापिप्रश्ना
ख्यानयोरितिप्लुतःस्यादित्याशयः॥निरर्थकशब्दसमुदायेति॥दशदाडिमानीत्यादिशब्दसमुदायेत्यर्थः॥देवदत्तेनशयितव्य
मितिअस्तिर्भवंतिपरोऽप्रयुज्यमानोप्यस्तीतिभाष्यंतुसाध्यत्वेनभासमानक्रियाप्रधानसुबंतातिरिक्तविषयमित्याशयः॥त

तीयंचैत्रंपश्यतीत्यादीति॥एतदुत्तरंसएतत्समानार्थकमेवतिङ्‌‧तिङ‧इतिवदत्सूत्रकाराभिप्रेतंवाक्यलक्षणंआख्यातंसविशेषणं वाक्यमितिसमर्थसूत्रेभाष्येउक्तमित्यादिः॥एकतिङितित्यस्यैकानुपूर्वीतिङं‧तवदित्यर्थइतिनब्रूहिवृद्धीत्यत्रनदोषइत्यलमित्यंतोग्रं थःक्वचित्पुस्तकेदृश्यते॥केचित्तुसुप्तिङं‧तचयइत्यस्यसुप्तिङं‧तयोश्चयइत्येवार्थः॥देवदत्तेनशयितव्यमित्रास्तीत्यध्याहारा न्नातिव्याप्तिः॥जरद्गवःकंबलपादुकाभ्यांद्वारिस्थितोगायतीत्यादौपरस्परमसंबंधात्निरर्थकसुप्तिङं‧तसमुदायेवाक्यत्वमि ष्टमेव॥अतएवालंकारिकैरपिअस्यवाक्यत्वमभ्युपगम्यदुष्टत्वमात्रंव्यवस्थापितंकिंत्वेवंपचतिभवतीत्यादिकेवलतिङं‧ तसमुदायेऽव्याप्तेर्लक्षणांतरंक्रियावाकारकान्वितेति॥जरद्गवादिवाक्यस्यतुनवाक्यत्वंपदार्थानांपरस्परमनन्वयात्॥लो केत्वर्थवंतिचानर्थकानिचवाक्यानिदृश्यंते॥अर्थवंतिदेवदत्तगामानय॥अनर्थकानिदशदाडिमानिषडपूपाःकुंडमयाजि नंपललपिंडमितिवृत्तिसूत्रस्यभाष्येदशदाडिमानीत्यादेर्वाक्यत्वव्यवहारस्तुभाक्तइत्याहुः॥स्वार्थइति॥स्वंचशब्दस्तदर्थसमु च्चयस्तदाश्रयोहरिः॥तदन्वयीस्वामीतदन्वयित्वंमेइत्यस्य॥प्रकृतसूत्रस्यैवेति॥पश्यार्थैरितिसूत्रस्यैवेत्यर्थः॥तत्रसमानवा क्येइत्येतत्संबंधात्प्राक्एवंवाचोयुक्तिः॥अतएवेति॥युक्तग्रहणाभावेपिसाक्षाद्योगस्यग्रहणादेव॥नपंचमीति॥पृथग्विना

नानाभिस्तृतीयान्यतरस्यामित्यनेन॥एवंचयुक्तग्रहणाभावेनपश्यार्थैरित्येतत्परस्परासंबंधेपिप्रवर्त्ततइति॥मूलोक्तमयुक्त
मितिभावः॥संबंधित्वेनविवक्षायामिति॥मत्वर्थेबहुव्रीहिरितिवार्तिकानुरोधेनेदम्॥तेनसहेतितुनसमासस्तुल्ययोगइत्युक्तेः
काव्यप्रकाशादाविति॥काव्यप्रदीपआदिपदग्राह्यः॥कातर्यकेवलानितिःश्योर्यम्वापदचेष्टितं॥अतःसित्थंसमेताभ्यामुभाभ्या
मन्वियेषसइत्यादौतथादृष्टत्वादितिभावः॥ननुसंज्ञाविधौतदंतविधिर्दुर्लभइत्याशंक्याह॥आमंत्रणमिति॥ननुप्रथमायाआ
मंत्रितसंज्ञायामप्यामंत्रितस्यप्रत्ययमात्रवृत्तित्वेनप्रत्ययग्रहणपरिभाष याप्रदेशेषुतदंतविधिसंभवेनामंत्रितसंज्ञायांतदंत
विध्यभावेपिनकश्चिद्दोषइतिमहासंज्ञाकरणंव्यर्थमित्याशंक्याह॥अतएवेति॥तदंतविधिस्वीकारादेव अत्रसंज्ञानस्यादिति
नन्वेवंसुप्संज्ञायाअप्यप्रवृत्तौसुप्तिङंतमितिपदत्वंहैहेइत्यादीनांनस्यात्॥किंचद्विवचनसंज्ञायाअप्रवृत्तौकुमार्याअगारंवध्व
गारमित्यादावीदूदंतंद्विवचनांतंप्रगृह्यमितिपक्षेप्रगृह्यसंज्ञापादनंभाष्यकृताकारीयमसंगतंस्यात्॥तस्मादंतरंगानपीतिन्यायो
धर्मिग्राहकमानबलेनसंज्ञाविधिभिन्नविषयइतिनकश्चिद्दोषइतिचेत्सत्यं॥अव्ययादावित्यादावुपजीवत्वेनसुबादिसंज्ञायाः
लुकःपूर्वप्रवृत्तावप्यामंत्रितसंज्ञायास्ततःपूर्वप्रवृत्तौमानाभावइतिआशयः॥अतदर्थमेवेति॥विभाषादिक्समासइत्यादावि

वलक्षणप्रतिपदोक्तपरिभाषयासंबोधनपदमुच्चार्यविहितप्रथमायाग्रहणवारणार्थंसेतिपदंतत्सामर्थ्याच्चप्रथमामात्रंसेतिपरा
मृश्यतइतिभावः॥ननुसंबोधनपदात्प्रातिपदिकार्थेतिप्रथमायामप्यामंत्रितसंज्ञाप्राप्तिः॥संबोधनमात्रबोधकत्वंतुअग्ने इत्या
दावपिनएकत्वादेरपिततोबोधादितिचेन्न॥संबोधनमभिमुखीकरणंतच्चप्रत्यासत्त्याप्रकृतक्रियाविषयंतथाचसंबोधनम
स्तीत्यादौप्रकृतक्रियायामभिमुखीकरणाभावात्नात्रसंबोधनेप्रथमाकर्मशब्देद्वितीयाभाववत्॥प्रकृतक्रियायांतद्विवक्ष
णेतुसंबोधनेचेत्यनेनैवप्रथमानप्रातिपदिकार्थसूत्रेण॥संबोधनस्याधिक्यात्॥कर्मगच्छतीत्यादौप्रथमाभाववत्अत्रापि
हेहेइत्यत्रापि॥संबोधनपदादस्यावारण मुक्तदिशाबोध्यं॥स्वाश्रयस्यापीति॥कतिपयस्येतिशेषः॥वत्करणेनसर्वथाऽविद्यमा
नंकिंतुतत्सदृशमितिबोधनात्॥पूर्वंकिमिति॥इदमत्रपूर्वमित्यादिपूर्वग्रंथेनगतार्थं॥एवमेवेति॥विद्याबलंदैवबलंतदेवेति
पूर्वपदस्थितएवशब्दात्परत्वादादेशइतिभावः॥वस्तुतस्तुनैतद्युक्तंएवशब्दस्यस्मरामीतितिङंतघटितवाक्यस्थत्वाभावेन
समानवाक्यस्थत्वाभावात्॥पष्ठ्यार्थैरितिनिषेधाच्च॥व्रजानिदेवदत्तेतिवत्वक्ष्यमाणरीत्याकथंचित्संभवेपितस्मात्तेइतिवि
भक्तिप्रतिरूपकमव्ययमित्येवयुक्तं॥इत्यादाविवेति॥नन्वेतदप्येतत्समशीलमितिकथमस्यदृष्टांतत्वमितिचेन्न॥हेलव

कुशोगेयेगानेप्रबंधे वांयुर्वाकेनपुरुषेणविनीतौशिक्षितावित्यर्थस्यविवक्षितत्वेनद्वितीयार्थकर्मत्वादेरनन्वयेनविभक्तिप्र
तिरूपकाव्ययस्यात्रावश्यकत्वात्॥नन्वेवंनार्थतोविभक्तिप्रतिरूपकत्वमितिवाच्यं॥परिष्करिष्यमाणस्यतस्यसत्वात्॥प्रकृ
तेपीति॥सर्वदारक्षदेवनइत्यत्र॥अन्यार्थमिति॥स्वार्थमित्यर्थः॥वहुवचनमसंगतमिति॥इत्यादिभ्यइत्यनेनगृहीताना
मेवसर्वेषामित्यनेनग्रहणमित्यभिमानेनेदं॥गंगेइत्यादीनांग्रहणेतुयथाश्रुतमेवसाधु॥निवृत्तिरिति॥वस्तुतोस्यच्छंदोविशे
षत्वाभावेननपादादिस्यत्वं॥नन्वग्नेतेजस्विन्नित्यनयोःपरस्परंविशेषणविशेष्यभावोस्तिवानवा॥नाद्यः॥नङिसंबुत्थ्योरि
तिसूत्रस्यभाष्यविरोधात्॥तत्रहिङि·संबुत्थ्योरनुत्तरपदेराजन्वृंदारकोराजवृंदारकः॥संबुत्थ्यर्थेननार्थः॥संबुत्थ्यंतानांस
मासः॥किंवक्तव्यमेतत्॥समाससमानार्थेनवाक्येनभवितव्यं॥यश्चेहार्थोवाक्येनगम्यतेनासौजातुचित्समासेनावयवसंबो
धनंवाक्येनगम्यते॥समुदायसंबोधनंसमासेनेतिभाष्यं॥कैयटश्चसंबुत्थ्यंतानामितिपृथगवयवार्थयोरभिमुखीकरणेपर
स्परैकार्थीभावलक्षणेसामर्थ्यायोगादिति॥नांत्यः॥सामान्यवच नत्वविशेषवचनत्वयोर्विशेषणविशेष्यभावाधीनत्वेन
तदभावेप्रकृतसूत्रस्यासंभवाद्वृत्तिकत्वापत्तेरितिचेद्यथेच्छसितथास्तु॥शब्दतःप्रथमंसंबुध्यंतार्थयोःपरस्परंविशेषणविशे

ष्यभावानवगाहिशाब्दबोधोपगमेप्यस्त्वाधिकरणन्यायेनपार्ष्णिकपरस्परावच्छेदमाश्रित्यसूत्रस्योक्तिसंभवोपपत्तेः॥ सर्वथाविशे
षणविशेष्यभावाभावेपिवाऽग्नित्वतेजस्वित्वयोः समान्यविशेषभावमात्रेणसूत्रस्योक्तिसंभवाच्च॥ तदुक्तंकैयटेनाग्ने देविस
रस्वतिइडेकाव्येविहव्येएतेषांपर्यायत्वेनसामान्यवचनत्वाभावः॥ सामान्यस्यविशेषापेक्षत्वादिति॥ देवकरोषीति॥ अत्रदेव
पदार्थस्यकारकप्रकरणेवक्ष्यमाणरीत्याभेदसंबंधेनक्रियायामन्वयेपितिङं तत्प्रकरणेक्रियाक्रियावतोरभेदइतिवक्ष्यमाण
रीत्याक्रिययासममभेदस्यवास्तवस्यसत्वेपितिङर्थेनवातस्यसत्वेनसामानाधिकरण्योपपत्तिः॥ अत्रसामानाधिकरण्येइति
चिंत्यप्रयोजनं॥ ननुसकर्मकत्वादंचेः सुप्युपपदेक्किपाभाव्यं॥ नचनिपातनसामर्थ्यात्कर्मणीत्यधिकारबाधः॥ सुपीत्यधि
कारस्यापिबाधापत्तेरित्यतआह॥ निपातनैरिति॥ संस्कारविशेषज्ञापकेनअंच्वित्यनुबंधनिर्देशेनसुपीतिप्रकरणबाधस्यन्याय्य
त्वादितिभावइतिकेचित्॥ अलाक्षणिकस्यापिकार्यस्यपूर्वोत्तरनिपातनेषुदर्शनेनतत्साहचर्यादत्राप्यंचतेः सुप्युपपदेएवक्किन्
नतुयुजेरिवनिरुपपदादित्यर्थइत्यन्ये॥ अनिदितां॥ हलः किं॥ नुतः॥ उपधायां किं॥ नष्टं॥ अंत्यसदेशपरिभाषातुअंत्यसदेशांनं
त्यसदेशयोरेकस्मिन्लक्ष्येयुगपत्प्राप्त्यभावेननप्रवर्त्तते॥ प्रत्यक्चेति॥ अन्येतुसुपातपदः विम्बबाहघटोहइत्यादौपूर्वस्यपद्भा

वसंप्रसारणेप्राप्नुतः॥नह्ययमंत्यबाधेत्यपरिभाषायाविषयः॥तथाचप्रत्यासत्यापदंतस्यांगस्ययत्कार्यंतस्यैवतत्कार्यमित्येषपंथाः शरणं।तेनैवचन्यायेनप्रत्यक्चेत्यादिसिधावंत्यबाधपरिभाषाव्यर्थैव॥तदेतदभिप्रेत्यैषापरिभाषाभाष्येप्रत्याख्यातेत्याहुः॥प्रत्यंचाविति॥प्रथमनकारस्य लोपेपुनर्नुमिप्रत्यंचाविति रूपं॥तथाचतन्मध्यपतितन्यायेननुम्विशिष्टस्याप्यचइत्यनेनग्रहणंस्यादितिभावः॥ नकाररहितप्रत्यग्भ्या मित्यपिबोध्यं॥नन्वण्ग्रहणानुवृत्तौकर्तृ चेत्यादौदीर्घानापत्तिरतस्तदनुवृत्तिर्नकर्त्तव्येत्यतआह॥कर्तृचेतिविवक्षितत्वादिति॥तथाचक वरेरूपेप्रत्ययेइत्यर्थेक्विबादिरित्येवार्थःपर्यवस्यतीतिभावः॥अंत्यस्येति॥यस्येत्यर्थः॥न्यायसित्धेर्थेगमकमप्याह॥अतएवेति॥अनेकक्लिष्टकल्पनेति॥आकडारीयेषुकार्यकालपक्षाश्रयणंतदेकवाक्यतां अंगांशेउत्थिताकांक्षत्वेनयजादिप्रत्ययेनानोविशेषणमित्यादिक्लिष्टकल्पनेत्यर्थः॥नलोपस्यासित्धत्वादिति॥नलोपः सुप्स्वरेतिसुप्विधौनलोपस्यासित्धत्वादल्लोपोनइत्यस्यचसुप्विधित्वात्॥बाधायोगादिति॥संज्ञाशास्त्रेणकार्यकालपक्षेस्वदेशत्यागेनाकडारीयत्वाभावादसित्धत्वाच्च॥उपसंहृतंभाष्येइति॥वस्तुतस्तुयथोद्देशपक्षेप्यन्नंतस्यभस्यांगस्यातोलोपइत्यर्थेपिनानस्तक्ष्णेत्यादौदोषः॥निर्दिश्यमानांत्यानकारएवलोपप्रवृत्तेः॥अस्यस्

इदंसइत्यादौसचासावेषचतदेषइत्यादौतदइदमश्चतकारस्यदकारस्यचतदोः ससाविति सत्ववारणायोक्तकल्पनायाआवश्य
कत्वात्नह्यत्रानंत्यविकारइतिपरिभाषाप्रवृत्तिःसंभवति॥त्यदाद्यत्वंबाधित्वापूर्वमेवप्रवृत्त्यांत्यवर्णतद्वर्णयोरितराव्यवधाना
भावात्एतच्छब्दस्यकृताकज्कादःशब्देनसमासेएतदसुकइत्यादौतत्परिभाषाप्रवृत्तिशंकायाअप्यभावाच्च॥नचोपसर्जन
त्वात्पूर्वस्यनतत्वंएवमप्यस्यायंददमयंयूयंपुत्रायस्यसयुष्मत्पुत्रस्तस्यत्वंयुष्मत्पुत्रत्वंइत्यादावयच्त्वमाद्यादेशापत्तेश्च
तस्मादेतत्परिभाषाप्रत्याख्यानमेवभाष्यकृतोभिप्रेतंयान्येतस्याःपरिभाषायाःप्रयोजनानितदर्थमेषापरिभाषाकर्त्तव्येतिभा
ष्यंतुप्रौढ्या॥प्रयोजनविशेषमप्रदर्श्यसामान्येनतथोक्तेः॥भसंज्ञायांकार्यकालपक्षोप्याश्रयितुंशक्यः॥तत्पक्षेपरिभाषाणा
मिवसंज्ञानामपिस्वदेशप्रच्युतौमानाभावात्अयादिभ्यःपरैवप्रगृह्यसंज्ञेतिभाष्यस्यप्रगृह्यसंज्ञाप्रयुक्तप्रकृतिभावइत्यर्थइति
नदोषइतिदिक्॥इतराव्यवधानएवेति॥ननुहंसशिरांसीत्यत्रैतत्परिभाषाप्रवृत्तिर्नस्यात्॥कार्यिणोंत्यवर्णस्यचसकारेणव्यव
धानादितिचेन्न॥इतरपदेननिमित्ततयाविशिष्यसूत्रानुपात्तस्यैवग्रहणेनादोषात्॥केचित्त्वत्रतच्छब्देनांत्यवर्णसदेशकार्यि
वर्णइत्यर्थः॥अंत्यत्वावच्छेदकवर्णवृत्त्युपाध्यवच्छिन्नतत्तत्सदेशकार्यिणोव्यवधानाभावइतितात्पर्यतिकोर्थः॥तेनहंसशिरांसीत्या

दावंत्यसंयोगतत्सदेशकार्यिणोरितराव्यवधानादेतत्परिभाषोपस्थितिरित्याहुः॥अत्रप्रमाणमिति॥तंत्रेणार्थद्वयेइत्यर्थः॥सू
चितमित्याहुरिति॥अन्येत्वत्रसूत्रकार्तिकभाष्यकृतामसेरित्यस्यप्रतिषेधएवतात्पर्यंवार्तिककृता॥अदसोद्रेरितिवचनपाठेने
तत्सूत्रभोष्येभाष्यकृतापदाधिकारादपदांतस्यमुत्वंनप्राप्नोतीत्याशंक्यपदयमसेरितिप्रतिषेधं शास्तितज्ज्ञापयत्याचार्यअप
दांतस्यापिभवतीत्युक्तेश्च॥अमुमुयङि·तिनसित्यतीत्युक्तयेदमेवरूपंसाधुत्वेनभाष्यकृतोभिप्रेतं॥अदद्र्यङि·तिप्राप्नोतीत्यु
क्त्यातत्रासंमतेःसूचनात्॥अदमुयङि·तिभवितव्यं॥अंत्यविकारेंत्यसदेशस्यकार्यंभवतीतिभाष्यंत्वेकदेशिनः॥स्वरवंडितपरिभा
षाश्रयणेनरूपापादनरूपत्वात्तस्येत्याहुः॥ननुविष्वद्रेवयोरित्यस्याभावेपिचकारेणसर्वनाम्नामनुकर्षणादम्वाचीत्यादेनास्य
प्राप्तिरित्याशंक्याह॥चस्यापीति॥ज्ञानकृतगौरवापत्तेरिति॥इदमुपलक्षणं॥साकच्केचविशेषात्॥अव्याकुलंगच्छतीत्यर्थक इ
ति॥एतेनांचुगतिपूजनयोरित्यस्यस्थानेऽचुगतावचिपूजायामित्येवसित्स्धेनांचेःपूजायामितिव्यर्थमित्यपास्तं॥ ॥ योपधत्वबोध
नद्वारेति॥नकारजावनुस्वारपंचमोझलिधातुष्वित्यतिप्रायिकं॥अपिनेति॥नलोपाभावोपीत्यपिनेत्यर्थः॥सलोपेकृतेषत्वमिति॥
एतेनषत्वंस्कोरितिसलोपइतिमूलेपाठक्रमादर्थक्रमस्यबलवत्वेनवैपरीत्येनव्याख्यानंसूचयतिएषदादिव्यावृत्तयेइति॥अतिप्र

त्ययांतस्यचेदेतयोरेवेतिनियमइतिभावः॥ननुलाघवायशत्रंताएवैतेनिपात्यंते॥वृहन्महतोरुपसंख्यानस्येष्टनियमपरत्वात्ति
त्थेः॥महच्छब्देयगाद्यभावनिपातनस्वीकारापत्तेश्च॥मन्मतेतुशतृप्रत्ययांतस्ययत्कार्यंतदतिदिश्यतेनतुशतृप्रत्ययेपरतोयत्कार्यं
तदपीतिदिक्॥अत्वसंतस्यचाधातोः॥तुशब्दादिति॥त्वर्थेचशब्दादित्यर्थः॥अतएवेति॥अधातोरित्यस्यासंतांशएवसंबंधादे
वेत्यर्थः॥अनुवादकमिति॥केचित्त्वंतग्रहणमौपदेशिकांतत्वप्रतिपत्त्यर्थं॥नचोपदेशेगोमानित्यतुबंतंनात्वंतमितिवाच्यं॥उपदे
शेजितिवाक्यार्थबोधस्यहलंत्यमित्येतद्वाक्यार्थबोधाधीनत्वात्तदुत्तरप्रकृतिकत्वात्पकारस्येत्संज्ञायांलोपेचकृतेऽत्वंतत्वसंभव
इत्याहुः॥नन्वन्यत्रलब्धविशस्यपरेणबाधोवक्तव्यः॥नचान्यत्रदीर्घेलब्धावकाशइतिअतआह॥वचनसामर्थ्यादिति॥तथाच
नुमिकृतेदीर्घस्यावकाशसंभवइतिभावः॥इदंचनिरवकाशत्वेसत्येवापवादत्वमितिवार्तिकमताभिप्रायेणोक्तं॥सत्यपिसंभ
वेबाधनंभवतीतिभाष्यमतानुसारेणाह॥अयमभ्युच्चयइति॥वस्तुतस्तुविद्यमानमपिपरत्वमन्यत्रचारितार्थ्याभावेनविप्र
तिषेधशास्त्रप्रवृत्त्यनुपयोगीत्युच्यते॥परंनित्यंचनुमंबाधित्वावचनसामर्थ्याद्दीर्घमूलग्रंथेन॥अत्रोत्सर्गेनुमिकृतेअपवादस्य
चारितार्थ्याभावेननात्रतक्रकौंडिन्यन्यायविषयइतिदीर्घेकृतेपिनुम्प्रवर्त्ततएव॥नन्वाश्रीयमाणेएवंभूतपूर्वगतिस्वीकारेप्पु

पदेशेपकारस्यसत्वेनोपदेशेऽस्त्वंतस्यांगस्यदीर्घइतिवाक्यार्थसंभवइत्याशंकांमनसिकृत्यतन्निरासायभूतपूर्वगत्याश्रयणेन
लब्धमर्थमाह॥तस्मादिति॥नलोपिनइति।इदंविशेषणंप्राङ्ब्राह्मणीत्यत्रङीबभावार्थं॥उगितश्चेतिसूत्रेभाष्येत्वंचतेरेवोगितो
धातोर्नान्यस्योगितोधातोरित्येवनियमशरीरमुक्तंकैयटेन॥नचनांचेःपूजायामितियदानलोपस्तदाप्रतिषिध्यतेतदापिङीप्प्रभ
वतीत्युक्तं॥अस्तिप्रयोजनइति॥प्रयोजनाभावेसत्यशब्दार्थप्रयोजनार्थत्वोक्तेरुपहासपरत्वादितिभावः॥विभावयंत्वि
ति॥ ꣸ ॥ ꣸ ॥ ꣸ ॥ ꣸ ॥केचित्तुयथेकोगुणवृद्धीतिसूत्रेगुणवृध्दिग्रहणानुवृत्तौपुनर्गुणवृध्दिग्रहणादाश्रितश
ब्दस्वरूपव्यापारयोर्गुणवृध्योर्बोध्यः॥एवंद्वेइत्यस्यानुवृत्त्यैवसिध्देपुनरुभेग्रहणाद्वित्वपर्याप्त्याश्रयसमुदायबोधोगर्ग
दंडनन्यायेन॥उक्तार्थलाभस्तुपाक्षिकः॥देवदत्तयज्ञदत्तविष्णुमित्राभोज्यंतामित्युक्तेप्रयोजकव्यापारस्यसमुदायविषय
त्वेपिप्रयोज्यव्यापारन्नफलतृप्तेःप्रत्येकवृत्तित्वेनभाष्यकैयटाभ्यांप्रदर्शितत्वात्तस्मादुभेग्रहणंसाहायार्थमितिकैयटोक्त
मपियुक्तमेवेत्याहुः॥ऐर्त्यास्मिन्नित्यादौजुसभावार्थंलूभेग्रहणंस्यादितिआक्षिप्येदंप्रयोजनंकार्यकालपक्षेआहोस्विद्यथोद्देशप
क्षेवानाद्यइत्याह॥कार्यकालपक्षइति॥ननुउक्तसमाधानप्रयासोव्यर्थअंतरंगत्वादंतादेशेश्रौतस्यान्यादेशभावमादायातीत्य

त्रनभित्वं॥तथाचांतिभावेकृतेनज्जुसापत्तिरित्याशंक्याह॥अन्यथेति॥द्व्यादिशब्दानामेकापायेप्रवृत्त्यभावस्यानंगीकारे॥
एकादेशइति॥झशनकारयोरेकादेशोनांत्यइत्याह॥यथोद्देशेइति॥ञ्चावितिद्वित्वेइति॥अंतरंगत्वात्भ्याम्भ्यस्तयोरित्या
लोपंबाधित्वेतिशेषः॥भ्याम्भ्यस्तयोरातइति॥नचालोपेकर्तव्येशपः स्लोः स्थानिवद्भावः शंक्यः॥ तस्यापरनिमित्तकत्वादभ्य
स्तग्रहणस्याचारितार्थ्याच्च॥आदंतस्ययङ्लुक्यभिधानेदृढप्रमाणाभावात्॥इहज्ञानमात्रमिति॥नतुपश्यार्थैरित्यत्रे वा
चाक्षुषमित्यर्थः॥इदंचिंत्यमिति॥केचित्तुक्विन्प्रत्ययस्यकुरितिसूत्रेभाष्येप्रत्ययग्रहणंअतद्गुणसंविज्ञानबहुव्रीहिविज्ञाना
र्थम्तेनसंप्रतिक्विनोऽभावेपिकुत्वं॥मानोस्रक्॥मानोअस्रग्गित्युक्तं॥तदेतत्कुत्वस्यषत्वापवाद त्वाभावेनसंगच्छते॥
रज्जुसृड्भ्यामित्यादाविवकुत्वमपवादत्वाद्बाधित्वाषत्वापत्तेः॥नचोपपयट्काम्यतिरज्जुसृड्भ्यामितिभाष्यप्रयोगेकथं
संगच्छेतामितिवाच्यं॥क्विन्प्रत्ययोयस्मादितिबहुव्रीह्यवधित्वस्यसृजेोनिरूप पदलक्षणस्ययजेोअनुपसर्गोपलक्षणस्यैवा
श्रयणेनादोषादित्याहुः॥षडङ्गकाः प्राग्वदिति॥ईदृशेविषये॥जश्त्वापवादत्वंचर्त्वस्यनेतिनेत्यनेनसूचयति॥उदकस्पर्शइ
ति॥केचित्तूदकस्पृडितिप्रत्युदाहरणमुचितं॥क्विन्प्रत्ययोयस्मादितिबहुव्रीह्यर्थावधित्वस्योदकाभिन्नोपपदलक्षणस्यैवा

म्रयणेनकुत्वस्याप्रवृत्तेः॥ नचैवंत्पदादिषूपपदेषुदृशेः क्विनोविधानेनकेवलेदृगित्यादौकुत्वंनस्यादितिवाच्यं॥त्यदाद्युप
पदस्यदृशेः क्विन्प्रत्ययप्राग्वर्तित्वेनदृष्टत्वेनकेवलेतत्वस्यार्थात्सिद्धेः॥उदकस्पर्शइतितुनयुक्तं॥वासरूपन्यायेनक
र्मण्यणः पक्षेइष्टत्वादित्याहुः॥नित्यत्वादिति॥नचस्वरेप्रत्ययलक्षणाभावात्कथमेतदितिवाच्यं॥एकपदस्वरेलुमता
लुप्तेप्रत्ययलक्षणाभावेपितदन्यत्रतत्सत्वात्॥पूर्वत्रासिद्धेतन्निषेधादिति॥नचवेतस्वानित्यत्रपदेंतइत्यर्थेनस्थानिव
त्वनिषेधपरभाष्यप्रामाण्यात्पूर्वत्रासिद्धेनस्थानिवदित्यत्रपदचरमावयवातिरिक्तस्यपूर्वत्रासिद्धस्यग्रहणाद्वेतस्वानि
त्यत्रपूर्वत्रासिद्धेनस्थानिवदितिनिषेधोनप्रवर्त्ततइतिनपदांतसूत्रस्थस्वग्रंथविरोधइतिवाच्यं॥भसंज्ञाप्रयोजकप्रत्यय
परकस्वादिनिमित्तकपदत्ववच्चरमावयवातिरिक्तस्येत्यर्थेनादोषात्॥नानेनषत्वमिति॥सतित्वस्याधिकारत्वेउत्तरसूत्रै
कवाक्यतयादेशप्रत्यययोरेवानेनषत्वविधानान्नकश्चिद्दोषः॥प्रकृतसूत्रस्यमिति॥नुम्विसर्जनीयशर्व्यवायेनिंसेः प्र
तिषेधः॥निंस्से॥ निंस्स्वेतिप्रकृतसूत्रस्थंभाष्यंप्रत्येकंव्यवधानेइत्यत्रमानं॥अवश्यंनुमोग्रहणंकर्त्तव्यंअनुस्वारविशेषणंनुम्
ग्रहणंनुमोयोनुस्वारस्तत्रयथास्यात्इहमाभूत्पुंस्विति॥हयवरट्सूत्रस्थंभाष्यंतुनुम्स्थानिकेत्यर्थेमानमितिबोध्यं॥सपाद

सप्ताध्यायीस्थेकार्यइति॥ अत्रसपादसप्ताध्यायीशब्देनषत्वशास्त्रात्पूर्वःसूत्रसमुदायोलक्ष्यते॥ तेनसंयोगांतलोपसंग्रहः॥ प्रति
पदविधित्वेनेति॥ ननुनियमशास्त्राणांविधिमुखेनप्रवृत्तेःस्वसिद्ध्यांतत्वेनवस्वेकाजाद्युसामितिटोपिप्रतिपदविधित्वमितिचे
न्न॥ आर्द्धधातुकस्येतिसूत्रविहितेटोनुवादरूपत्वेनप्रतिपदविधित्वाभावइत्याशयात्॥ पूर्वोपस्थितिनिमित्तकमंतरंगमित्यत्र
निमित्तशब्देनसप्तम्यंतोपात्तस्यैवग्रहणमितितदाशयः॥ स्वरप्रवृत्तौदोषात्॥ केचित्त्वेवंसतिविषयसप्तम्याश्रयणंनकिमर्थस्या
दितिसमाससंज्ञापेक्षांतोदात्तात्प्रागेवभवतीतिभगवतोदाक्षीपुत्रस्याशयइत्याहुः॥ नित्यत्वात्सत्वंबाधित्वेति॥ इदंपूर्वान्वयि॥
टिलोपेकृतेदस्यां त्यत्वाभावात्सत्वाप्राप्तेःदस्यानिकसत्वस्यतुसाकचूकेचारितार्थ्य॥ ननुम् चउश्चेतिइतरेतरद्वंद्वेद्विवचनापत्तिरि
त्याशंकयाह॥ मुंइतिसमाहारद्वंद्वइति॥ ॥इतिहलंताःपुल्लिंगाः॥ ॥नह्योधः॥ दत्वेविधातव्येधत्वविधानंतुनत्धमित्यत्र
झषस्तथोरितिधत्वार्थं॥ मूलेदलोपषत्वेइतिपाठःसुगमः॥ उदःस्थास्तंभोरितिनिर्द्देशेनोदित्यस्यदांतत्वात्॥ इतिपक्षेइति॥ प
दस्यादिरितिपक्षेतुनिषेधोनप्राप्नोति॥ गतिकारकोपपदानामितिप्राक्सुबुत्पत्तेःसमासेउत्तरभागस्यपदत्वाभावादितिभावः॥
व्याख्यानादिति॥ उपात्तस्यरूपस्यलौकिकेप्रयोगेऽनुपालंभाच्छास्त्रीयस्यसानुबंधकरूपस्याश्रयणं॥ अस्तीहनिरनुबंधकरूप

वि॰ स्यप्रातिपदिकस्यलैाकिकेप्रयोगेउपलंभइतिप्रत्ययलक्षणंनैवप्राप्नोतीतिव्याख्यानपर्यतानुधावनंव्यर्थमितिकेचित्॥ दिश्
११७ अतिसर्जनेक्विनितिपाठः॥क्विबितित्वपपाठः॥जस्त्ववचर्त्वेइति॥इदमेतन्मतेसप्तमीबहुवचनविषयं॥ ॥इतिहलंताःस्त्रीलिं
गाः॥सोपपदाद्विचइति॥तथासतिगतिकारकोपपदानामितिसुबुत्पत्तेःप्राक्समासेउत्तरपदस्यपदत्वंषत्वेपिदुर्लभंस्यांदि
तिभावः॥सात्पदाद्योरित्येवेति॥स्वरितोवानुदात्तेपदादावितितुपदादाव नुदात्तेएकादेशस्तस्यस्वरितविधिर्नतुपदादेःसा
क्षाद्विधिरितिसोपिपदादिविधिशब्देननगृह्यतेइतिभावः॥ननुसात्पदाद्योरित्येवेत्यसंगतं॥उत्तरपदादिःकर्णोवर्णलक्षणादि
त्यादिविध्यंतरस्यापिसद्भावादित्याशंक्याह॥उत्तरपदादिरिति॥अन्यथाकर्णोवर्णलक्षणादितिस्वरोपिपदादिविधिःअकारस्या
नादित्वात्॥स्वरविधौव्यंजनमविद्यमानवन्नत्वादिव्यपदेशा ·सूत्रंचासमासार्थंस्यात्॥कर्णशब्दादर्शआद्यचिकृतेतुमु क्तः
कर्णइत्याद्युदात्तत्वंयथास्यादित्यतआह॥उत्तरपदादिति॥पूर्ववार्तिकमपीतिभाष्येउत्तरपदत्वेचापदादिविधौलुमतालुप्तेप्रत्यय
लक्षणंनभवतीतिवचनंपठित्वाततःस्वादिषुपूर्वंपदंभवतिपूर्वंपदंनभवतीत्याद्यनेकविधयोगविभागेनप्रत्याख्यायदधिसेचा
वित्यादौषत्वार्थंपदादादिरितिपंचमीसमासाश्रयणेबहुसेचोबहुसेचइत्यादौदोषमुद्भाव्यतदुत्तरपदत्वेचेपदादिविधौलुमतालु

प्रेप्रत्ययलक्षणंभवतीतिवक्ष्यामितन्नियमार्थंभविष्यतिपदादिविधावेवनपदांतविधावितिकथंबहुसेचौबहुचपू र्वस्यपदादि
विधावेवनपदांतविधावित्युक्तं॥नञ्घटितेतद्वचनपाठेनेति॥अन्येतुप्रत्याख्यानप्रकारएवयुक्तः॥उत्तरपदत्वेचेपदादिवि
धौप्रत्यलक्षणप्रतिषेधः॥बहुचपूर्वस्यचापदादिविधावितिवचनद्वयापेक्षयाप्रत्याख्यानस्यलघुत्वात्॥तथाहिस्वादिषुपूर्वं
पदंभवतिततोऽसर्वनामस्थानेयचि॥यजादेसर्वनामस्थानेपूर्वंतद्धटकंचपदंन॥ततोभं॥यजादावसर्वनामस्थानेपूर्वंतद्ध
टकंचभंभवतीत्यर्थइतिसर्वेष्टसिद्धिःस्पष्टा॥नचदधिसेचावित्यादौषत्वापत्तिः॥पदादादिरितिपंचमीसमासाश्रयणात्॥नच
बहुसेचावित्यत्रषत्वापत्तिः॥पद्यतेगम्यतेऽर्थोनेनेतिव्युत्पत्त्यापदपदस्यार्थवत्परत्वात्॥पदंचप्रकृतिभिन्नमेवसातिग्रहणात्
तेनप्रतीषिषती त्यत्रनदोषः अर्थवदितितुषिशब्दमादायोत्तरस्यषत्ववारणाय॥एवंचसतिषष्ठीतत्पुरुषेपिनदोषः॥नचैवं
कुमारीष्वित्यत्रषत्वनिषेधापत्तिः॥सातिग्रहणेपदसंज्ञाशून्येप्रत्ययेपदादित्वप्रयुक्तप्रतिषेधाप्रवृत्तिज्ञापनात्॥प्रत्याख्या
नोत्तरंनञ्घटितेतद्वचनपाठस्त्वेकदेशिनः॥कथंतर्हिपदादादिःपदादिरितिभाष्यग्रंथोपितथैव॥किंचवचनारंभपक्षेकाश्य
पेनप्रोक्तमधीयतेकाश्यपिनइत्यादौनलोपापत्तिः॥कंठेब्राह्मणानीत्यनेनप्रोक्तप्रत्ययांतस्याध्येतृप्रत्ययंविनाऽप्रयुक्तत्वबो

धनेपि सुबुत्पत्तेः प्राक् तत्प्रवृत्तिबोधकत्वेमानाभावात्॥ किंचजं ब्रूः फलेजंबावित्यत्रेकोसवर्णइति प्रकृतिभावापत्तिः॥नह्य
त्रफलप्रत्ययस्यसुबुत्पत्तेःपूर्वत्वंप्रत्याशापि॥ किंचबहुचर्मिकेत्यत्र वच नारंभेनलोपानापत्तिः॥ प्रत्ययलक्षणप्रतिषेधेन
पदत्वाभावात्॥ कप्रत्यय निमित्तंपदत्वंतुसमुदायस्य॥ततश्चयत्प्रातिपदिकसंज्ञकंचर्मनितिनतत्पदं॥यच्चपदंबहुचर्मन्नि
तिनतत्प्रातिपदिकमितिनलोपोदुर्लभः॥अपिचवचनारंभेपूर्वंदंडिप्रियइत्याद्यर्थंमध्यमत्वानाक्रांततेतिविशेषणेतिगौरवमि
तियत्किंचिदेतदित्याहुः॥अतएवेति॥एनदस्त्यदाद्यत्वादेवेत्यर्थः॥ अनयोरपीति॥ एनादेशस्यएनदश्चेत्यर्थः॥एनद मा
दायेत्याद्येकदेश्युक्तिरित्यंतोग्रंथोऽपवादत्वमजानतएकदेशिनोयद्येनदित्याद्युक्तिरितिपूर्वग्रंथेनपुनरुक्तोपितद्विवरण
परतयाकथंचिन्नेयः॥अन्येतुयद्येनतत्क्रियतेएनोनवक्तव्यइत्यादिभाष्यस्वारस्येनद्वितीयाटौस्वेनइत्यत्रैवएनदुक्तव्यइति
लभते॥ नचयेननाप्राप्तिन्यायेनैनदस्त्यदाद्यत्वापवादत्वेनतत्रकृतेत्यदाद्यत्वाप्राप्तेःयद्येनदित्याद्येकदेश्युक्तिरितिवा
च्यं॥नलुमतेतिनिषेधानित्यत्वेनकुंडमानयप्रक्षालयैनदित्यत्राप्येनदःप्रवृत्यातत्रचत्यदाद्यत्वाप्रवृत्यायेननाप्राप्तिन्या
याप्रवृत्तेः॥सत्वस्यत्यदाद्य त्वादानपवादत्वस्यैवतक्रकौंडिन्यन्यायानित्यत्वेनैनदोपितदनपवादत्वस्योपपत्तेश्च॥यद्ये

वमेनश्रितकोनसिद्ध्यति॥एतच्छ्रितकइतिप्राप्नोतिइत्यग्रिमभाष्यंत्वेकदेश्युक्तिः॥उपसर्जनत्वेनैनदादेशस्यतत्राप्रवृ
त्तेः॥नलुमतेतिनिषेधाच्च॥नलुमतेत्यस्यानित्यत्वंतुधर्मिग्राहकमानेनैकपदाश्रितलुक्येव॥तथाचैतेनकृतमेतत्कृतमि
त्यादौनैनदादेशप्रवृत्तिरित्याहुः॥इत्यलमिति॥अन्येतुसावकाशः कः कोवकाशोनंत्यइत्यादिनलोपः प्रातिपदिकेतिसू
त्रस्यभाष्यप्रामाण्येनत्रिपाद्यांनतक्रकौंडिन्यन्यायः स्कोः संयोगाद्योरित्यादितुनिरवकाशत्वेनसंयोगांतलोपादि बाधकं
अतएवरथीतरसिद्धिः॥अन्यथानलोपंबाधित्वानस्येत्वेतस्यासिद्धत्वात्सवर्णदीर्घानापत्तिः॥अतएवधुक्सुवृडित्यादौभ
ष्भावत्वत्वादिषुकृतेषुजश्त्वादिसिद्धिः॥ अन्य थाऽपवादत्वात्तैर्जश्त्वापवादत्वापत्तिः॥रहाभ्यामितिनिमित्तत्वेनकार्यि
त्वबाधस्तुहयवरडितिसूत्रस्थभाष्यबलादेव॥अस्तुवात्रिपाद्यामितरविधिषुयथातथा॥नलोपविषयेतुईत्रथीनःरथी
तरः॥भूरिदाव्नस्तुट्भूरिदावतरइतिभाष्यप्रयोगबलेननोत्सर्गापवादभावः॥अतएवंनलोपःप्रातिपदिकसूत्रेभाष्ये ऽप्यन
वकाशोरुर्नलोपंबाधिष्यतइत्युक्तंनत्वपवादोरुरित्याहुः॥इदमेवन्याय्यमिति॥अन्येतुक्विन्प्रत्ययस्यकुरितिसूत्रेइदंतर्हिप्र
योजनंयेभ्यःक्विन्विधीयतेतेषामन्यप्रत्ययांतानामपिकुत्वंयथास्यान्मानोअस्राक्मानोअद्राग्गितिभाष्यात्कुत्वस्यासिद्ध

त्वात्षत्वे क्विन्प्रत्ययस्येति कुत्वं भवत्येव॥षत्वस्य कुत्वापवादत्वं तु न त्रिपाद्यां तत्र कौंडिन्यन्यायाप्रवृत्तेः॥पदांते विशिष्य षत्व
विधि कल्पकाभावाच्च॥विश्वसृड्डा दौ तु न कुत्वं॥ ॥ ॥ क्विन्प्रत्ययस्येत्यतद्गुणसंविज्ञानबहुव्रीहेर्विज्ञाने पि स्पृशो नुद
के इति सूत्रे ऽनुदकग्रहणेन क्विन्प्रत्ययविधायकशास्त्रानुपात्तोपपदके क्विप्प्रत्ययांते क्विन्प्रत्ययस्येत्यस्याप्रवृत्तेः॥अनु
दकग्रहणं तूदक उपपदे क्विपः प्रवृत्तये तत्रापि कुत्वप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव॥तेनोदकशब्दे उपपदे उदकस्पृडित्येव॥असृक्
शब्दस्त्वस्यतेरौणादिके ऋजप्रत्यये बोध्य इत्याहुः॥ननु गवाक्शब्दस्य रूपाणीति मूलग्रंथो ऽसंगतः॥ क्लीबे चागतिभेदत इ
त्युत्तरग्रंथानुरोधे नपूजार्थस्याप्यनुकरणावश्यकत्वेन तत्र गवागिति रूपाभावादित्याशंक्याह॥शब्दपरत्वेनेति॥त
था च गवाच्शब्दस्यानुकरणं प्रकृतिवदनुकरणमिति नलोप इति क्लीबे चागतिभेदत इति वाक्यशेषो नासंगत इति भावः।सौ
लुका लुप्तत्वादिति॥सर्वनामस्थानत्वाभावाच्चेत्यपि बोध्यं॥स्वांपीत्येवेति।अत एव सुस्वांपि तटानीति प्रयोगः संगच्छते॥इति
हलंता नपुंसकलिंगाः॥ ॥स्वरादिनिपातमव्ययं॥सर्वेषामिति॥तत्तच्छक्तिप्रधानानां सर्वेषामित्यर्थः॥भाष्यप्रामाण्यादिति
एवं हि तत्र भाष्यं॥अथ सायंचिरयोः किं निपात्यते प्रत्ययसन्नियोगेन मांतत्वं निपात्यते॥नैतदस्ति मकारांतः सायंशब्द इति।के

पटस्थानेनसायंशब्दप्रत्याख्यायते॥अव्ययादेव ट्यु ट्युलौ: सित्यत्वात् चिरमित्यस्यतुमांतत्वंनिपात्यतइतिचिरमित्यव्यय
सत्वेतुसायंशब्द व च्चिरंशब्दस्यापिप्रत्याख्यानंभाष्यकृत्कैयटौवदेतामितिभावः ननुवत्यंतस्या व्ययसंज्ञायांयदुद्भूतो
निवतइत्यादौविभक्तिश्रवणानापत्तिरित्याशंक्याह॥उपसर्गाच्छंदसीति॥भाष्यस्वरसोप्येवमेवेति॥एवंहितत्रभाष्यं॥अथवा
पुनःस्तुकृदंतमकारांतमितिकथंप्रतामोप्रतामइति॥आचार्यप्रवृत्तिर्ज्ञापयतिनप्रत्ययलक्षणेनसंज्ञाभवतीति॥पद
यंप्रशाम्शब्दंस्वरादिषुपठतीति॥ यदिचस्वरादिषुप्रशाम्शब्दपाठस्तदाशानतेजनइत्यस्मात्क्विपितत्राव्ययसंज्ञार्थंपा
ठस्यचारितार्थ्येनज्ञापकत्वासंगतिः॥तस्मात्क्विपोनभिधानकल्पनंतुक्लिष्टमितिभावः॥नञः स्वरादिष्विति॥निपातत्वा
देवसित्येरितिभावः॥अव्ययेति॥इदंतत्पूरुषेतुल्यार्थेइतिसूत्रस्थंवचनं॥ ॐ ॥अव्ययग्रहणे एतेषांग्रहणमितितदर्थः॥
अकर्णिरिति॥आक्रोशेनञ्यनिरितिकृञोऽनिरितिभावः॥माङोपीति॥निपातत्वादेवसित्येरितिभावः॥नन्वर्थतः सारूप्यग्र
हणेगेयेकेनविने तावामित्यत्राव्ययसंज्ञानस्यात्।वामित्यस्यकर्मत्वावोधकत्वादित्याशंक्याह।गेयेकेनेति॥विभक्त्यंतसमानार्थत्व
स्यैवेति॥युष्मच्छब्दप्रकृतिकविभक्त्यंतसमानार्थत्वंयुवामितिप्रथमाद्विवचनमादायशब्दतः सारूप्यंवामितिद्वितीयाद्विव

स्वनांतत्वमादाय॥ नन्वेवंसतियुगपदित्यादीनामपिएकंकालेइतिविभक्त्यंतमादायार्थतःसारूप्यं॥ युगंपततीत्यर्थकयुगप
च्छब्दमादायशब्दतःसारूप्यंतथाविभक्तिप्रतिरूपकत्वादेवयुगपदित्यादीनामव्ययत्वेसिद्धेयुगपदित्यस्यपाठोव्यर्थइतिचे
न्न॥ यच्छब्दप्रकृतिकविभक्त्यंतमादायार्थतःसारूप्यं।तच्छब्दप्रकृतिकविभक्त्यंतमादायैवशब्दतःसारूप्यविवक्षितत्वेना
दोषात्॥ नन्वेवंस्वरप्रतिरूपकत्वमपिशब्दतोऽर्थतश्चविवक्षणीयंस्यादित्याशंक्याह॥ स्वरांशेतुनेति॥ अन्येतुस्वराद्येकरू
प्यायशब्दतएवसारूप्यंनार्थतस्तेनतस्मादित्यर्थकतदित्यस्यप्रथमांतार्थकत्वामित्यस्यचाव्ययत्वसिद्धिः॥ अतएवधनवाचि
नोस्तिशब्दस्यविभक्तिप्रतिरूपकत्वेनाव्ययत्वसिद्धिरितिमतुप्सूत्रेभाष्यकैयटोक्तंसंगच्छते॥ विभक्त्यंतंचपदद्वयाघटित
मेवेतिनयुगपदित्यादीनांपाठवैयर्थ्यमित्याहुः॥ लुप्तषष्ठीकमिति॥ इदमयुक्तं॥ प्रथमांतानामेवद्वंद्वविधानेनतच्चितोरितिद्वं
द्वेषष्ठ्यंतस्यप्रवेशानर्हत्वात्॥ तत्तदर्थविभागइति॥ प्रकृतिप्रत्ययविभागस्तदर्थविभागश्चेतिवाक्यस्यतच्छब्दयोःप्रकृतिप्रत्यय
परयोर्द्वंद्वइतिभावः॥ शब्दरत्नेतुवीप्सायांकृतद्विर्वचनस्यतच्छब्दस्यार्थशब्देनतत्पुरुषइत्युचितं॥ चादिस्वरादिपठितानामिति॥
इदंविशेषणंव्यर्थं॥ गोरित्यादावव्ययत्वापादकंइणअसिरितिनिष्पन्नेऽणइत्यादावव्ययत्वानापत्तिस्तुनास्माकंस्वरादिपाठ

सामर्थ्येनतत्सिद्धेः॥विहितानांनियमपक्षइति॥इदमुपलक्षणं॥प्राप्यमाणानांनियमपक्षेपीत्यस्यार्थस्य॥अस्योपपत्तिरिति॥अं
सर्वविभक्तित्वस्योपपत्तिः॥अत्रपक्षेइत्यस्यजातस्यनिवृत्तिरित्यनेनान्वयः॥सर्वेष्वर्थेष्वित्यस्यसर्वविभक्त्युत्पत्तावित्यनेनान्व
यः॥सर्वेषुकर्मादिष्वर्थेषुद्वितीयाद्येकैकविभक्त्युत्पत्तौजातायामित्यर्थः॥कर्माद्यर्थेयोग्यात्प्रातिपदिकाच्चेत्कर्मणिविभक्ति
रितिप्रातिपदिकाच्चेत्कर्मणिविभक्तिस्तदाद्वितीयैवेत्येवसिद्धौकर्माद्यर्थेत्यादिविशेषणव्यर्थं॥तद्योग्यप्रातिपदिकात्प्रथ
मैवेतिइदंविशेषणंअव्ययेभ्योपिद्वितीयाद्यर्थं॥अर्थनियमइति॥यतएवकारस्तत्तोन्यत्रनियमइतिसिद्धांतात्॥अत्रप
क्षइति॥अर्थनियमपक्षेइत्यर्थः॥प्रकृतार्थापेक्षप्रत्ययनियमपक्षमाह॥कर्माद्यर्थेति॥सामान्यापेक्षप्रत्ययनियमपक्षमाह॥
अथेति॥ननुसर्वेष्वेतेषुपक्षेषु अव्ययानांप्रातिपदिकार्थसूत्रोदाहरणत्वमनुपपन्नं॥तथाचप्रातिपदिकार्थग्रहणंकिमर्थं
उच्चैर्नीचैरित्यत्रापियथास्यादितिप्रातिपदिकार्थसूत्रस्थंभाष्यंविरुध्यते॥प्रातिपदिकार्थसूत्रस्यपर्युदासन्यायेनकर्मादियो
ग्यप्रातिपदिकार्थएवप्रथमाबोधकत्वादितिचेत्प्रातिपदिकार्थसूत्रस्योक्तनिष्कृष्टार्थमनाश्रित्याव्ययानांतदुदाहरणत्वेनो
पन्यासइत्याशयात्॥वस्तुतस्तुप्रातिपदिकार्थसूत्रेकर्मादियोग्यप्रातिपदिकादित्यर्थेमानाभावादव्ययानांतदुदाहरणत्वमुपप

न्ने॥तत्रार्थनियमेकर्मादिरहितप्रातिपदिकार्थेप्रथमैवेतिनियमेनप्रथमैवाव्ययेभ्यः प्राप्नोतिनद्वितीयादिः॥अर्थनियमेसि
त्धमितिबहुष्विितिसूत्रस्यभाष्यस्यप्रथमायावचनत्रयंसित्धमित्येवार्थः॥प्रकृतार्थापेक्षप्रत्ययनियमेकर्माद्यर्थप्रतिपादन
योग्यप्रातिपदिकाच्चेद्वितीयातदाकर्मणिसत्येवनतुतदसत्वेइत्यादिरेवसूत्रार्थः॥तेनगांदोग्धीत्यादावपादानत्वादावपि
द्वितीयादिः॥बहुष्विितिसूत्रस्यस्यैकस्मिन्नेवैकवचनंनद्वयोर्नबहुष्विितिभाष्यस्यापिसंख्यावत्वयोग्येषुचेदेकवचनंतर्हिएक
त्वेसत्येवनतुतदसत्वइत्यर्थः॥नद्वयोर्नबहुष्विितितुफलितार्थकथनमितिदिक्॥नन्वेकवचनमितिसूत्रंव्यर्थं॥द्वित्वबहु
त्वयोर्द्विवचनबहुवचनोक्तावर्थादेकवचनस्यतद्विषयेप्रवृत्तिसित्धेरित्यतआह॥द्वित्वबहुत्वयोरिति॥अप्राप्तप्रापणार्थ
मिति॥सामान्यापेक्षप्रत्ययनियमपक्षएवसित्धांत्यभिप्रेतइतिभावः॥अन्येतुसामान्यापेक्षः प्रत्ययनियमः तत्रहुंफडादि
भ्योनिरर्थकेभ्योविभक्तेरप्राप्तौएकवचनमित्यौत्सर्गिकमेकवचनं॥सार्थकाव्ययेभ्यस्तुप्रातिपदिकार्थइतिप्रथमैकवचनं
दोषामन्यमहःअत्युच्चैरित्यादिवृत्तिविषयेकर्मत्वान्वयात्द्वितीयैकवचनंतेनात्यादयःक्रांताद्यर्थेद्वितीययेतिसमासः॥एवंस्वः
शब्दात्द्वितीयापंचमीसप्तम्येकवचनानिस्वःपश्यस्वआगतःस्वःस्थितइत्यादिप्रयोगदर्शनात्॥एवमपदिशेत्याद्यव्ययीभावात्त

दर्थकर्मत्वादिसत्वेनद्वितीयातृतीयासप्तम्येकवचनानीत्यादियथायथंबोध्यमित्याहुः॥नानेनसर्वैकवचनमिति॥किंतु
प्रथमाद्वितीयातृतीयैकवचनान्येवेत्यर्थः॥ज्ञापनाच्चेति॥इदमुपलक्षणमव्ययादाप्सुपइतिप्रत्याहारग्रहणाच्चेत्यपि
बोध्यं॥नन्वेकत्वेएकवचनस्याविधानेनघटइत्युक्तेएकत्वनिश्चयोनस्यादित्याशंक्याह॥घटइत्युक्तइति॥ननुबहुष्वि
त्यादिसूत्रेष्वेकवचनमितियोगविभागमनाश्रित्योक्तनियमपक्षानाश्रित्याव्ययेभ्यःसर्वविभक्तीनांसर्वाणिवचनानी
त्युक्तंतत्कुतोनोक्तमित्यतआह॥बहुष्वित्यादिसूत्रेष्विति॥भाष्ये ननुविशिष्यासन्निधानात्तत्थितांतइतितद्धितविधिः
कथमतआह॥बहुव्रीहिलभ्यंविशेष्यइत्याहेति ॥ इत्यभिप्रेत्याहेत्यर्थः॥संज्ञाकार्यस्येति॥लुकइत्यर्थः॥तत्वेनबहिरं
गत्वेन॥अव्ययीभावादाविति॥वस्तुतस्त्वव्ययीभावस्यशक्तिलिंगविशेषयोगेपिवचनादव्ययत्वं॥आधेयइत्यादेरन्व
र्थसंज्ञाबलेनाव्ययत्ववारणसंभवेपिसन्निपातपरिभाषाप्रयोजनकथनार्थं॥भाष्यकृतैतदुपेक्षितं॥उपादास्तेति॥समू
र्धन्यपाठः॥सन्निपातपरिभाषयाक्त्रिःतिचेतिनिषेधस्यनिवृत्तिरित्याशयेनसगुणपाठः॥वस्तुतस्त्वत्वप्रवृत्तिपूर्वका
लिकमेत्वमात्वस्योपजीव्यंतच्चनक्त्रिःतिचेतिनिषेधविनाश्यं॥यच्चनिषेधेनविनाश्यमित्वोत्तरकालिकंनतदात्वस्यो

पजीव्यं तस्मादेच् विषयेत्वात्वविधानादकित्वसन्निपातनिमित्तमात्वंस्याध्वोरिति किल्वस्यानिमित्तं कित्वसन्नियुक्तं चेत्त्व
मिति कित्वाभावेन भवतीति कैयटोक्तरीत्यैव सन्निपातपरिभाषाविरोध उपपादनीयः॥ तत्र चात्वोपजीव्य कित्वस्य साक्षादेव कि
त्वेन विनाशः॥ भावाभावयोर्विरोधादिति॥ नैषा प्रतिबंदी युक्ता॥ तस्माद्व्याख्यानाद्भाष्यप्रामाण्याच्च संनिपातविघातकत्वं परंप
रयाप्याश्रीयत इत्येवेत्युक्तं॥ तादृशमहासंज्ञाकरणात्समुदायस्य नाव्ययत्वमित्येव वक्तुं युक्तं॥ तादृशार्थानामित्यारभ्यमा
नाभावेनेत्यंतो ग्रंथः प्रकृतानुपयुक्तः॥ न ह्यत्रांतर्गणकार्यं किंचित्प्राप्नोति येनोपयुज्येत ॥ साहचर्येणेत्युत्तरमर्थस्येति शेषः॥ प्र
सित्यश्चासावंतरंगश्चासौ पदांतरानपेक्षश्चासावनुपसर्जनीभूतश्चेति विग्रहः॥ अत्र प्रसित्यांतरंगपदांतरानपेक्षेति विशेषणं
व्यर्थं॥ अनुपसर्जनीभूतस्यलिंगाद्यनन्वयिन इत्येतावता पूर्त्तेः॥ अत एवेति॥ अत्युच्चैसावित्यत्रावयवस्याप्यव्ययसंज्ञाभावादे
वेत्यर्थः॥ व्यर्थ एवेति॥ अव्ययसंज्ञायां कार्यकालपक्षाश्रयणात्॥ अत्युच्चकैरित्यादावकजर्थं प्रवृत्ताव्ययसंज्ञामादाय न लुक्॥ उ
च्चैराविति॥ उच्चैः शब्दात्परो द्विवचनांतोऽश्शब्दो बोध्यः॥ तस्य च परादिवत्वेन विभक्तित्वाद्विहितविशेषणाभावे लुगापत्तिरित्या
शंकावारणायेदं॥ उच्चैराभ्यामिति॥ विहितविशेषणाभावेत्र टापो लुगाप्रत्तिरिति भावः॥ णिश्रिसमाधोभ्वादिः॥ यन्नव्येतितद

व्ययमितिवाक्यशेषंव्याचष्टे॥तदिति॥तदितिपदंतस्मादित्यर्थकमित्यभिप्रेत्यव्याचष्टे॥अभावादिसादृश्यादेवेति॥यद्वेतीति
व्याचष्टे॥यद्विविधंरूपमिति॥नेतीतिव्याचष्टे॥नप्राप्नोतीति॥ ॥इत्यव्ययानिसमाप्तानि॥ ॥इतिसुब्विभक्तिकार्याणि
॥श्रीः॥स्त्रियां॥सत्वादीनांगुणानामि॥ननुब्रह्मशब्दस्यनपुंसकत्वमात्मशब्दस्यपुंस्त्वंचितिशब्दस्यस्त्रीत्वंकथं॥सत्वादी
नांगुणानांतत्राभावादितिचेन्न॥परास्यशक्तिर्विविधेव॥आत्मनिचैवंविचित्राश्चहीतिश्रुतिसूत्राभ्यामात्मनिपुंशक्त्यादिस
त्वेनसर्वलिंगोपपत्तेःसतामपिसर्वलिंगानांतत्तच्छब्दप्रतिपाद्यत्वावच्छेदेनैवाभिव्यक्तिरितिनातिप्रसंगः॥शशविषाणादौत्व
सदेवलिंगंविषाणत्वादिवदवभासते॥यद्वाऽन्यथाख्यातिस्वीकारादन्यत्रसच्छशीयत्वंसतिविषाणेऽवभासतेइतिलिंगव्यव
स्थासिद्धिः॥केचित्तुशशविषाणादावंतःपदार्थसद्भावात्तद्वारकोलिंगयोगइत्याहुः॥अजशब्दस्यस्त्रियामजाशब्दस्यपुंसिकदा
प्यप्रयोगाच्छास्त्रीयमेवटाबाद्यभिधेयमितिवक्तुमशक्यमित्यभिप्रेत्याह॥तत्रेति॥तत्संभवेत्विति॥अन्येतुलौकिकलिंगस्य
प्रतिपाद्यत्वसंभवेतदेवनोभयंगौरवादित्याहुः॥उपचयाऽपचययोःसतोरितिशेषः।तन्मात्रविवक्षायामिति॥विवक्षाचलोक
व्यवहारानुवादिनीग्राह्यानतुप्रायोक्त्री॥तदुक्तंहरिणा॥सन्निधानेनिमित्तानांकिंचिदेवप्रवर्त्तकं॥यथातक्षादिशब्दानांलिंगे

षुनियमस्तथा॥भावतत्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताइति॥लिंगंचार्थगतमेवनशब्दगतमितिप्रकृतसूत्रस्यभाष्यात्स्व
मोर्नपुंसकादितिसूत्रस्यभाष्याच्चस्पष्टमेवगम्यते॥स्त्रीपुन्नपुंसकादिशब्दानांप्रवृत्तिनिमित्तमेवलिंगंनततोऽन्यत्॥तद
पिप्रायेणशास्त्रीयमेवसतिसंभवेलौकिकमपि॥तद्वाच्यार्थगतमिति॥इदंविशेषणंव्यर्थं॥व्यावर्त्याभावात्॥एवंव्याख्या
नेइति॥षष्ठ्यंतत्वमाश्रित्याजादीनांवाच्यंयत्स्त्रीत्वमितिव्याख्यानेइत्यर्थः॥अतएव॥स्त्रीत्वस्यद्योत्यत्वादेव॥ॐ समुच्च
यस्य॥द्योतकसमुच्चयस्य॥वाचकसमुच्चयस्तप्रायेणनदृश्यतइतिभावः॥अजादि रूपमेवेति॥नन्वेवंचटकिकाजिकेत्या
दौजातिलक्षणोङीषूदुर्वारः॥अज्ञातार्थयोगेपि जातिलक्षणानपायात्। कांतस्यानजादित्वेनटायोःप्रवृत्तेरितिचेन्न॥अज्ञात
त्वाद्यधिकप्रवृत्तिनिमित्तत्वेजातिमात्रप्रवृत्तिनिमित्तकत्वाभावान्ङीषोऽ प्रवृत्तेरितिदिक्॥तदंतस्यापीति॥तदंतस्ये
वेत्युचितं॥व्याख्यानादेवेति॥अनुपसर्जनाधिकारमूलात्॥सामर्थ्येनेति॥अजाद्यतइत्यस्यषष्ठ्यंतत्वाश्रयणसामर्थ्येनेत्य
र्थः॥जातिश्चेद्वाच्येतिभाष्यकैयटयोस्तुजातिरित्यस्यनशूद्रेत्यंशेसंबंधः किंतुअमहत्पूर्वेत्यंशेशूद्रस्यस्त्रीशूद्रीत्यत्रगौण
मुख्यन्यायेनटाप्नेत्युक्तं॥प्रातिपदिककार्येपिस्त्रीप्रत्ययेगौणमुख्यन्यायःप्रवर्ततइतितद्भावः॥एवंत्वजस्यस्त्रीअजीत्येव

गौणमुख्यन्यायेनटापोऽप्रवृत्तेः॥यद्वामुख्यार्थकेष्वजादिषुजातिलक्षणङीषंबाधित्वाचारितार्थस्यटापः पुंयोगेपरत्वान्ङी
षाबाधः॥अयजेइंद्रमित्यादौसवर्णदीर्घस्यगुणेनेव॥जातिवाचकत्वाभावादिति॥प्राधान्येनजातिविशिष्टवाचक
त्वादित्यर्थः॥ नचात्रगौणत्वमितिननुशूद्रस्यस्त्रीशूद्रेवतथाचकथंशूद्रशब्दस्तत्रगौणः नचशूद्रशब्दः शू०
शूद्रसंबंधित्वेनस्त्रीबोधकइतितत्रगौणः॥शक्यतावच्छेदकारोपएवगौणीवृत्तिरितिनव्यसिद्धांतात्॥अतएवाग्नायीदेव
ताऽस्याग्नेयइत्यत्रभस्याढेइतिपुंवद्भावः॥अन्यथातुल्येप्रवृत्तिनिमित्तेभाषितपुंस्कत्वाभावात्तदुर्लभइतिचेन्न॥अशूद्रा
यदाशूद्रस्यस्त्रीविवक्षितातदागौणत्वमित्याशयात्॥जातिमात्रविवक्षयेति॥कैयटेत्वसतिजातिग्रहणेऽमहत्पूर्वेतिप्रति
षेधसामर्थ्यादंतरंगोपिटाप्बाध्येतेत्युक्तं॥नचाभीर्याप्रतिषेधचारितार्थ्यं तत्रापिसमासस्वीकारेणसुबुत्पत्तेःपूर्वंटापोदुर्वा
रत्वात्॥ननुमहाशूद्रशब्दस्यमहत्वविशिष्टशूद्रत्वप्रवृत्तिनिमित्तकत्वेनजातिमात्रप्रवृत्तिनिमित्तकत्वाभावेनकथं
ङीषित्यतआह॥प्रधानेतीति॥उग्रायामिति॥उग्र्यामित्युचितं॥अजादित्वंवाकल्प्यं॥क्वचिदुग्रकन्यायामितिपाठः॥अनु
लोमसंकराणामिति॥उत्तमवर्णादधमवर्णायामुत्पन्नानामित्यर्थः॥मातृजातिवृत्तित्वादिति॥मातृजातिमत्वेनस्मृति

वि० बोधकत्वादित्यर्थः।अतएवमहाशूद्रीत्यत्रशूद्रशब्दस्याऽर्थवत्वादेव॥ब्राह्मणादीनांक्षत्रियादिभिः क्रमेणान्वयः॥अत्रक्षत्रि
१२४ याद्याअनूढाएवग्राह्याः॥ननुब्राह्मणादुग्रायामुत्पन्नस्यशंखस्मृतिबलेनशूद्रत्वावगमात्तत्रतांजातिमारोप्येतिपूर्वग्रंथासंग
तिः॥अतएवश्रीमत्कृष्णद्वैपायनादिभिः क्षत्रियासूत्वादितानांपांडवादीनांक्षत्रियत्वमितिचेन्न॥औशनसस्मृतावनुलो
मसंकराणांकेषांचिज्जात्यंतरकथनेनत्यदादी नीतिसूत्रेभाष्येआभीरत्वस्यशूद्रत्वव्याप्यत्वाभावोक्त्याचतत्रसंपूर्णशूद्र
त्वानंगीकारात्॥अतएवतत्रमहाशूद्रशब्दस्यप्रयोगोनकेवलशूद्रशब्दस्या शूद्रादुत्तमत्वात्तस्य॥शूद्रधर्माश्चसर्वेनतत्र
प्रवर्त्तंते॥शंखस्मृत्याशूद्रत्वारोपाच्चकेचिच्छूद्रधर्मास्तत्रप्रवर्त्तंते॥अयमारोपोनगौणमुख्यन्यायप्रवर्त्तकः शास्त्रबोधित
त्वात्कतिपयधर्मप्रापकत्वाच्च॥इमांकुसृष्टिमनाश्रित्यतुकैयटेनोक्तं॥अमहत्पूर्वेतिनिषेधोनवक्तव्यः॥नहिमहाशूद्रीत्य
त्रशूद्रार्थगतंस्त्रीत्वमितिटापः प्रसंगाभावइति॥एतेनपुंयोगेटाप्वारणायजातिश्चेद्वा च्येत्यस्यमुख्यजातिमतीचेद्वाच्येत्य
र्थस्यावश्यकतयाऽभीर्याशूद्रत्वारोपेणटापोऽप्रवृत्तेरमहत्पूर्वेतिनिषेधोव्यर्थइत्यपास्तं॥अस्यारोपस्यशास्त्रबोधितत्वे
नतद्धर्मप्रापकत्वेनचमुख्यसमशीलत्वात्॥ननुमहाशूद्रीत्यत्रयोगार्थस्यापिसत्वेनजातिमात्रप्रवृत्तिनिमित्तकत्वाभा

वेनङीष् न स्यादिति चेन्न॥ अवयवार्थस्य संभवमात्रेणाश्रयणेपि रूढस्यार्थप्रवृत्तिनिमित्तस्य व्यभिचारवारणायानाश्रयणे
नजातिमात्रेति मात्रपदेन तादृशस्यैव व्यावर्त्यत्वेनादोषात्॥ अत एव योगेन मन्त्वपत्यबोधकत्वेपि अगोत्रप्रत्ययान्तमनु
षीत्यत्र जातिलक्षणङीष् सिद्धिः॥ केचिदिति॥ छागीति भूयः प्रयोगदर्शनमत्रारुचिः॥ इत्युक्तेरिति॥ वस्तुतस्तूगिदूर्णे
ग्रहणवर्ज्यमिति व्यर्थ॥ उगितश्चेत्यत्र वनोरचेत्यादाविवा महत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदंतविधिज्ञापनेनादो
षात्॥ उगित्वाऽत्वयोः प्रातिपदिकाप्रातिपदिकसाधारण्येनोक्तनिषेधस्योगितश्चात इञित्यनयोरप्रवृत्तेश्च॥ स्पष्टं चेद
मुगितश्चेति सूत्रे भाष्ये॥ अत एवेति॥ टापोऽनपवादत्वेन क्वचिङीपः प्रवृत्तेरेवेत्यर्थः॥ एतत्प्रत्याख्यातमिति॥ प्रत्याख्या
नमित्युचितः पाठः॥ एतस्य संगच्छत इत्यनेनान्वयः॥ सूत्ररीत्येष्टस्येति॥ इदं चिंत्यं॥ ङीवंतप्रयोगस्य सूत्ररीत्येष्टत्वेम
नाभावादिति तर्कचंद्रिकाकाराः॥ केचित्तु पंचेत्यादौ टाप्ङीपोरुभयोर्निषेधाय नषडिति सूत्रे ङीपोनुवृत्तेरावश्यकतया
मंडूकप्लुतौ मानाभावेन टाबृचीत्यनेन ङीपो विधानं सूत्रकृत्संमतमित्याहुः॥ असंभवेनेति॥ अमहत्पूर्वग्रहणाच्च॥ कार्य
कालपक्ष इति॥ यथोद्देशपक्षे तु नांतत्वसमानाधिकरणषट्त्वस्यानल्धर्मत्वेन स्थानिवत्त्वेनापि सोलभ्यमिति भावः॥

तदंतेपी ति॥अमहत्पूर्वग्रहणेनस्त्रियामित्यधिकारस्यविधिनिषेधसाधारण्येनतदंतविधिज्ञापनादितिभावः॥स्त्रियांयत्प्रा
प्नोतीति॥नन्वेवंसतिप्रियपंचेत्यादौडाबुभाभ्यामित्यपिनस्यादितिचेदिष्टापत्तेः॥केचित्तुटाप्ङीपोरुभयोरनुवृत्यातयोर्निषे
धेपिडाप्निषेधेमानाभावः।ङीबंशेबाध्यसामान्यचिंतयाऽनउपधेतिङीबपिनेत्याहुः॥आश्रयणबलादिति॥बाध्यसामान्यचिंताश्रयण
स्यानउपधेतिङीबभावस्यफलत्वेनानुपदमेवकीर्तनाच्चिंत्यमेतत्॥बहुयज्वभ्यामिति॥इदमपिचिंत्यं॥अन्नंतत्वाभावे
नानोबहुव्रीहेरित्यस्याप्राप्तेः॥यथाचान्नंतत्वाभावस्तथोपपादितंश्वयुवेतिसूत्रेशेखरे स्त्रियांयत्प्राप्नोतितन्नेत्यर्थाश्रयण
बलाद्भूतपूर्वगतिरित्याशयोवाकल्प्यः॥वस्तुतस्त्वन्नंतत्वमपिस्यानिवद्भावेनानेतुंशक्यं॥श्वयुवेतिसूत्रस्थःशेखरस्तुचिंत्य
एव॥ननुश्वयुवेतिसूत्रस्थंभाष्यंकथंसंगच्छतामितिचेन्न॥अनोऽवयवस्याकारस्यैवाल्लोपोनइतिलोपविधानादंत्यस्यश्व
युवेतिसूत्रस्यशेखररीत्याऽनेतुमशक्यत्वात्॥एतेनधीवरीत्यादावल्लोपापादनमपास्तम्॥अनउपधालोपिनः॥गृह्यमाण
स्यचान्नंतस्येति॥धीवन्नित्यादेरित्यर्थः॥ध्वनितंचेदमिति॥अनुपसर्जनादित्येतन्नसंबध्यतइत्येतदित्यर्थः॥इत्यनंतरमि
ति॥अनुपसर्जनाधिकारात्प्राग्वर्तिनिअनोबहुव्रीहेरितिसूत्रेउपधालोपिनोवेतिन्यासकरणेनतत्रानुपसर्जनाधिकारासंबं

धो ध्वनितइतिभावः॥अन्यतरस्यांग्रहणंत्विति॥उपधालोपिनोवेतिवाग्रहणंत्वित्यर्थः॥अन्यथेति॥सुपर्वेत्यादौडाप्प्रतिषेधयोः
सावकाशत्वाप्रतिसंधानेइत्यर्थः॥अन्येतुगृह्यमाणस्यान्नंतबहुव्रीहेर्बहुधीवेत्यादेरनुपसर्जनस्यसंभवेनबहुदामानिपुराण्य
तिक्रांतानगर्यतिबहुदामेत्यादावन्नंतबहुव्रीहेरुपसर्जनस्यचसत्वेनानुपसर्जनादित्यनउपधेतिसूत्रेसंबध्यतएव॥अनोबहु
व्रीहिप्रतिषेधेउपधालोपिनोवेतिवक्तव्यमितिवनोरचेतिसूत्रस्थंभाष्यंतुडाबुभाभ्यामनुपसर्जनादित्युत्तरंतद्वक्तव्यमित्येवंपर
मित्याहुः अनेनेति॥वर्णात्कारइतिविहितकारप्रत्ययांतनिर्देशेनेत्यर्थः॥नप्राप्नोतीति॥सामर्थ्यान्निर्दिष्टपरिभाषाबाधेतुरथक
स्यादावतिप्रसंगइतिभावः॥उच्चारणार्थतये ति॥धकित्हिरूगि त्याद्यनुरोधेनेत्यर्थः प्रत्ययस्यत्वांशेति॥निर्मुक्तानुबंधएवप्र
त्ययसंज्ञाप्रवृत्त्याकचिकेइतिसमुदायस्यप्रत्ययस्यत्वाभावादितिभावः॥केवलेति॥नचकांतात्प्रत्ययादित्यर्थवारणायस्थ
ग्रहणमितिवाच्यं॥क्षिपकादीनांचेतिनिषेधेनककारस्यप्रत्ययविशेषणत्वज्ञापनेनादोषात्॥अणीति॥टिड्ढेतिङीप्तुन॥के
वलमामकेतिनियमात्॥वार्तिकमतेपीति॥भाष्यकारमतेतुप्रत्ययलक्षणसूत्रस्यनियमार्थत्वेननलुमतेत्यनेनस्थानिवत्वस्य
निषेधेप्रत्ययलक्षणमप्यर्थान्निषिद्धं॥प्रत्ययलक्षणसूत्रस्यस्थानिवत्वानुवादकत्वात्॥कन्यकेत्युत्तरंध्रुवकेत्यपपाठः॥ग

णेपठितत्वात्॥निर्दिष्टपरिभाषाप्रवृत्तेरिति॥उत्तरांशविकलतस्मादितिपरिभाषाप्रवृत्तेरित्यर्थः॥अनञ्पूर्वाणामपीतिस्पष्टार्थमि
ति॥सूत्रेऽपिशब्दोनञ्पूर्वकभिन्नार्थकः सोपिस्पष्टार्थइत्यर्थः॥अकचिवापुनर्विशिष्टात्त्वपीति॥ननुनञर्थान्वितैतदर्थेऽज्ञा
ताद्यर्थविवक्षायांसमुदायात्तुबुत्तरमेवाकज्युक्तइतिचेत्सत्यं॥पाठक्रमवैपरीत्येनयोजनेनादोषात्॥एवमत्यंतस्वार्थिक
कांतेपीति॥एतेनहंसंतनोः सन्निहितेज्वरंतंमुनेर्मनोवृत्तिरिवस्विकायामितिप्रयोगोव्याख्यातः॥अकचिस्याडापत्तेः॥स्वस्यानि
ष्क्रांतेतिस्वस्मान्निष्क्रान्तेतिविग्रहेतुनेत्वविकल्पः॥ज्ञास्वेतिनिर्देशेनस्त्रीत्वबोधकस्वशब्दएवेत्वप्रवृत्तेरितिभावः॥अनुपस
र्जनात्॥अनविधानमेवेति॥ननुटिड्ढाणञित्यादावतइत्यधिकारेणादंतात्किपितुकोलोपस्यवाप्रसंगेनङीपोप्रसंगादनभिधानं
निर्मूलंव्यर्थंचेतिचेन्न॥दीर्घादप्यूङोविधानेनानभिधानस्यतदभिप्रायकत्वोपपत्तेः॥अत्रोपसर्जनत्वंनशास्त्रीयंकिंतुलौकिकं
पूर्वसूत्रेऽप्रधानस्योपसर्जनसंज्ञाक्रियतेयावद्बूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेतितावदित्यनुपसर्जनादितिप्रकृतसूत्र
स्थभाष्यात्॥ननुपंचगवधनइत्यत्र॥द्विगोरितिटिड्ढेतिवाङीप्स्यात्॥वक्ष्यमाणदिशाटित्वस्याप्रवृत्तित्वेनप्रत्ययग्रहणप
रिभाषायाअप्रवृत्तावपिअवयवेटित्वस्याचारितार्थ्येनसमुदायोपकारकत्वावश्यंभावात्॥स्पष्टाचेयंरीतिरनुपसर्जना

दित्यत्रकैयटेइत्यतआह॥पंचेति॥आपिशलिनेति॥इञश्चेत्यण्ततोध्येत्र्यांतदधीतइत्यण्॥तस्यप्रोक्तात्लुगितिलुक्॥अध्ये
त्रण्तुलुप्तइति॥अतस्तन्निमित्तकोनङीबितिवाक्यशेषः॥ननुतस्यलुप्तत्वेप्रत्ययलक्षणेनतमाश्रित्यङीप्दुर्वारइत्याशं
क्याह॥अण्योऽकारइति॥तदण्निमित्तकस्येति॥प्रोक्ताण्निमित्तकस्येत्यर्थः॥तदणः॥प्रोक्ताणः॥एतत्स्त्रीत्वे॥अध्ये
तृस्त्रीत्वे॥अतएवेति॥वर्णाश्रयेप्रत्ययलक्षणाभावादेवेत्यर्थः॥नङीबिति॥अध्येत्रणमाश्रित्येतिशेषः॥तदंतविधिंविनेति॥
ननुग्रहणवतेतिनिषेधः॥स्वरूपेणोच्चारितेप्रातिपदिकएवनान्यत्रटितस्त्वतथात्वादुक्तनिषेधाप्रवृत्तेोतदंतविधिःसुलभएवे
तिचेन्न॥ग्रहणमुपादानमात्रंनतुस्वरूपेणेत्युगितश्चेतिसूत्रेकैयटेनोक्तेः॥अतएवऋष्यंधकवृष्णिकुरुभ्यश्चवृत्त्याच्क
इत्यादौनतदंतविधिः॥सदुर्लभइति॥अणंतस्यगृह्यमाणत्वंतूक्तदिशाबोध्यं॥अनन्वयापत्तेरिति॥ननुएरपत्यंस्त्रीईइत्य
त्राण्रूपंप्रातिपदिकंसंभवत्येवेतिचेत्सत्यं॥द्व्यसजाद्यंशेतन्मात्रस्यप्रातिपदिकत्वासंभवेनतदंतविधौतत्साहचर्येणतदं
शेपिसइत्याशयात्॥निष्कृष्येकार्थीभावइति॥ययोर्वृत्तिस्तन्मात्रवृत्त्येकार्थीभावइत्यर्थः॥अप्रातिपदिकत्वाच्चेति॥नन्वेवं
कदाचित्ततोपिढकीतिपूर्वग्रंथासंगतिरितिचेन्न॥कर्मण्यणित्यस्यटिड्ढाणञित्यत्रोपस्थितिसामर्थ्येनाप्रातिपदिकत्वेपित

वि० तोङीबितिपूर्वग्रंथाशयात्॥ तदंतविधौतुसंप्रतिकुंभकारेतिसमुदायंप्रातिपदिकमादाय तदुपस्थितिचारितार्थ्येसामर्थ्य
१२७ विरहः॥कर्मण्यणित्येवसित्थेपीलिकामीतिणविधानेनाप्रातिपदिकत्वेपिङीपः प्रवृत्तिरित्याशयः॥ उद्योतेविस्तरइ
ति॥अन्येतुअतिभवतीअतिधीवरीप्रियपंचेत्यादावुगितश्चवनोरचनषडित्यादिविधिप्रतिषेधप्रवृत्तयेः महत्पूर्वग्रहणेन
स्त्रियामित्यधिकारेतदंतविधेर्ज्ञापितत्वान्नतदर्थमनुपसर्जनाधिकारः॥ किंचानुपसर्जनाधिकारेणतदंतविधिज्ञापनात्प्राग
प्यणंतात्प्रातिपदिकादित्यर्थस्त्वयांगीकृतस्तथाचापिशलाब्राह्मणीत्यत्रप्रोक्ताणमादायङीब्वारणायानुपसर्जनाधिकारआवश्य
कइतिनतस्यतदंतविधिज्ञापकता॥ अतिमहतीत्याद्यर्थंस्त्रियामित्यस्यप्रकृतिविशेषणनिर्णयेनप्रोक्ताणःस्त्रियामवृत्तावपितदं
तस्यस्त्रियांवृत्तेः॥ ननुस्त्रियामित्यस्यप्रकृतिविशेषणत्वमप्यनुपसर्जनाधिकारज्ञाप्यमेवेतिचेन्न॥ तदंतविधिज्ञापकत्वमि
कृतोप्येतत्ज्ञापनंविनावैयर्थ्यानुत्धारेणा वश्यकत्वात्स्त्रियामित्यस्यप्रकृतिविशेषणत्वेज्ञापितेउक्तस्थलेङीप्वारणाय
चारितार्थ्येनतदंतविधिज्ञापकत्वासंभवः॥ अनुपसर्जनाधिकारस्येषुतदंतविधेरुपयोगाभावश्चाननुत्वत्प्रयोजनंकुंभकारेय
इत्यस्यपाक्षिकस्यवारणमितिचेन्न॥ अनुपसर्जनेस्त्रीप्रत्ययइत्यनेनतदादिविधिप्रतिषेधेनतत्रापिपाक्षिकानिष्टप्रसंगस्यदुर्वा

त्।अर्थवत्सूत्रोक्तार्थवत्वाभावेनेतिदूषणंतवापिसमं।कर्मण्यणित्यस्यात्रोपस्थितौमानाभावः।तदादिनियमाभावेनाधिकस्यकार्यबो
धकतेनन्यूनस्येत्यपिनिर्मूलं किंचशीलिकामीतिज्ञापकाश्रयणेनकथंचिदुक्तप्रतिबंदीवारणसंभवेपिकाष्ठश्रितायाअपत्यंकाष्ठ
श्रेतेयइति प्रयोगवारणायनिष्कृष्येकार्थाभावएवप्रायेणवृत्तिनिमित्तं।भाष्यादिप्रामाण्यात्तुक्वचित्तद्भावेपितत्स्थितादिः॥किं
चस्त्रीभ्योढगित्यत्रस्त्रीवाचकानांग्रहणमितित्वदुक्तदिशासर्वमिदंगजस्नानसमं॥तस्मादापिशलेत्यादौङीप्वारणमेवानुसर्ज
नाधिकारप्रयोजनं।तदुक्तमत्रसूत्रेभाष्येआपिशलमधीतेआपिशलाब्राह्मणीत्यत्रङीप्मभूदित्ययमधिकारइति।इदंतर्हिप्रयोज
नंप्रधानेनतदंतविधिर्यथास्यात्कुंभकारीअत्रहिप्रत्ययग्रहणेइतिपरिभाषयाऽवयवादुत्पत्तिःप्राप्नोतीत्येतत्सूत्रस्थंभाष्यम
नुपसर्जनादित्येषयोगःप्रत्याख्यायतइतिसर्वादिसूत्रस्थंभाष्यंचैकदेश्युक्तिरुक्तबाधकबलादितिसुधियोविभावयंत्वि
त्याहुः॥प्रयोजनाभावादित्यादिनेति॥ननुभविषीष्टेत्यत्रभाष्यमतेगुणापत्तिरितिचेदत्रकेचित्॥भूसुवोरितिसूत्रेतिङःसार्व
धात्वितिविशेषणादार्धधातुकेलिङिगुणनिषेधोनेत्याहुः॥अन्येतुगाङ्कुटीङित्वेननङिदादेशानांङित्वमितिज्ञाप्यतेतेनभविषीष्टेत्य
त्रनदोषः॥उक्तज्ञापकेनैवाचिनवमित्यादिसित्यौपिच्चङिन्नेतितुभवंतीत्यादौशपःसार्वधातुकमितिप्राप्तङित्वनिषेधार्थ

वि० मित्याहुस्तन्न ॥ गाङ्कोडिन्त्वस्य गाङ्कुटेति सूत्रे विशेषणार्थत्वात् ॥ तत्फलमिणोगादेशे कर्मणि लुङि अगासातां ग्रामो देवदत्ते
१२८ नेत्यत्राङित्त्वान्नेत्वं ॥ नल्पपीति धर्मिग्राहकमानाल्लादेशभिन्नमेवानुबंधकार्यस्यानिवद्भावेन ॥ तेन भविषीष्ट वक्ष्यमाणेत्या
दौ न दोष इत्यन्ये ॥ ननु निरनुबंधकपरिभाषया ढग्रहणे ढको ग्रहणं न स्यादित्याशंक्याह ॥ निरनुबंधकस्येति ॥ शिलाया ढ श्छंद
सीत्यादेः ॥ स्पष्टं चेदं भाष्य इति ॥ निरनुबंधकस्येत्याद्युक्तमित्यर्थः ॥ ननु स्वरे विशेषः ङीपोऽनुदात्तनिवृत्तिस्वरेणोदात्तत्वादि
त्याशंक्याह ॥ एतौ हीति ॥ उपरंजकतयेति ॥ इष्टनिङ्संज्ञावारणायात्राप्यादिरित्यावश्यकमित्यन्ये ॥ द्वेवर्षे भूतेति ॥ तेनेति शे
षः ॥ अपरिमाणेत्यत्र परिच्छेदकमात्रस्याग्रहणेन पारिभाषिकपरिमाणस्यैव ग्रहणेन चेति तस्यार्थः ॥ वर्षशब्दः संवत्सरवाच्य
दंतो नपुंसकः तस्मादुत्तरो वर्षाल्लुक्च चित्तवति नित्यमिति विहितस्य लुक् ॥ ननु विस्तशब्दस्य यत्ताविशिष्टसुवर्णपरत्वात्त
स्य च विक्रुत्यसंभवात्पचतीत्यनुपपन्नमित्याशंक्याह ॥ पचेरिति ॥ अत्रोन्मानत्वादिति ॥ नन्वार्हादगोपुच्छेति सूत्रे परिमाण
शब्देन पारिभाषिकपरिमाणग्रहणेपि उन्मानस्यापि ग्रहणमिति स्वेन वक्ष्यमाणत्वादसंगतमेतदिति चेन्न ॥ नव्यविवरणे
आर्हादिति सूत्रे परिमाणशब्देनोन्मानस्य न ग्रहणमिति पक्षांतरस्याप्युक्तत्वेन तद्रीत्यैतद्ग्रंथसत्त्वात् ॥ पुरुषस्येति ॥ पंचा

रत्निः पुरुषइतिवचनादितिभावः॥उन्मानत्वादिति॥उन्मानशब्देनतुलायामारोप्यपन्मीयतेतदूर्ध्वाधरदिगवस्थितव
स्तुपरिच्छेदकंचेत्युभयमपिगृह्यतइतिभावः॥लोकव्यवहारादिति॥द्विपुरुषीपरिखेतिलोकव्यवहारादित्यर्थः॥उत्तरसू
त्रानुरोधादिति॥संख्यायाः संज्ञेत्युत्तरसूत्रानुरोधादित्यर्थः॥संख्याह्निनपारिभाषिकपरिमाणं॥बहुव्रीहेरूधसः॥नंन्वन
ङ्ङीषोः समानविषयकत्वेनपर्यायेणतयोः प्रवृत्त्याङीष्पक्षेनानङितिकथंडाप्ङीप्निषेधेषुप्राप्तेष्विति ग्रंथः संगच्छ
तामित्यतआह॥समासांतानामिति॥तथाचपूर्वमनङ्पश्चान्ङीषिति नानयोः पर्यायइतिडाप्ङीबिति मूलंयुक्तमितिभा
वः॥बहुव्रीहेः किमितिऊधः शब्दस्यनपुंसकत्वात्केवलात्तदंतादुत्तरपदार्थप्रधानात्तत्पुरुषाच्चनङीष्॥अत्यूधः शब्दस्य
स्त्रियांवृत्तावपिततः संख्याव्ययादेरितिङीपाभवितव्यंतथाचबहुव्रीहेरित्यनुक्तावपितएतएवपर्यवस्यतीतिभावः॥प्रा
प्तोधाइति॥अत्यूधाइतिइतितूत्तरस्थबहुव्रीहिग्रहणप्रत्युदाहरणमित्युपेक्षितं॥ यद्यपिघ्नोङीषितिसुवचंतथाप्युत्तरार्थंबहु
व्रीहिग्रहणं॥लक्षणांतरसित्थमिति॥दामहायनांताच्चेतिसूत्रसित्थमित्यर्थः॥घृतादित्वादिति॥अयंविचारः प्रासंगिकः॥न
नुसुमंगलीरित्यत्रहल्ङ्यादिसूत्रेणलोपे नभवितव्यमित्याशंक्याह॥ईप्रत्ययइति॥छंदसीवनिपावित्यनेन॥विभाषासप्

यद्यप्यमहत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदंतविधिज्ञापनेन सपूर्वस्येत्यनुक्तावपि तस्य नत्वं सिस्यति तथापि असति त
स्मिन्ननुपसर्जनादिति पत्युर्विशेषणं स्यात् तस्य गृह्यमाणविशेषणत्वनियमात्तथा च दृढपत्नीति बहुव्रीहौ न स्यादतः सपूर्व
ग्रहणं॥ सपूर्वस्येत्युक्तौ तु तस्यैव विशेषणं गृह्यमाणत्वात्॥ फलांतरमपि मूले स्पष्टीभविष्यति॥ किंपूर्वावयवोऽर्थवानेव॥ उ
तानर्थकोपि॥ नाद्य इत्याह॥ विद्यमानपूर्वावयवत्वेति॥ नांत्य इत्याह॥ अव्यभिचाराच्चेति॥ अमहत्पूर्वग्रहणेन ग्रहणवते
ति निषेधस्यात्र प्रकरणे प्रवृत्त्यभावज्ञापनात्प्रत्ययविधानाभावाच्चेत्यपि बोध्यं॥ इत्यन्ये इति॥ वस्तुतस्तु बहुवृषलपतिरिति
बहुव्रीहेरपि पत्यंतत्वात्तस्य चानुपसर्जनत्वादत्रापि नकारो भवत्येव॥ ननु मूले व्यस्ते कथमित्युक्त्या समस्ते वृषलपत्नीत्या
दौ नत्वानुपपत्तिशंका नेति लभ्यते तच्चासंगतम्॥ विभाषेति सूत्रे यज्ञसंयोग इत्यनुवृत्त्या वृषलस्य यज्ञानधिकारेण तत्राप्य
नुपपत्तिशंका तादवस्थ्यादित्याशंक्याह॥ न संबध्यत इति॥ अत्र प्रमाणमाह॥ भाष्ये इति॥ वृषलस्य पतिरिति। वृषलकर्तृक
सुकृतस्वामिनीत्यर्थः॥ ननु सपूर्वस्य किं गवांपत्तिरिति मूलमसंगतं॥ सपूर्वस्येत्युक्तावप्येतद्दोषतादवस्थ्यात्॥ गवामित्यस्य
पूर्वोच्चारितस्य सत्त्वादित्याशंक्याह॥ अवयववाचीति॥ तेन निपातेन॥ तत्रेत्यर्थ इति॥ तत्र सूत्रे इत्यर्थः॥ तेनेति॥ तत्र सर्वत्रेत्यं
गीकारेणेत्यर्थः। आद्येन सूत्रेण युक्त इत्यण्॥ द्वितीये संधिवेलेत्यण्॥ तस्य विकार इत्यणि तु नेदं॥ प्रतिपदोक्तपरिभाषया नक्षत्रपदघटित

शास्त्रेणविहिताणएवग्रहणात्॥ इत्यपरइति॥ इदमेवयुक्तं॥ विधित्वानुरोधादिति॥ मुख्यार्थकेतत्प्रवृत्तेीतत्रजातेरस्त्रीत्यनेनसिद्धौ
नागग्रहणस्यनियमार्थत्वंवाच्यंस्यादितिभावः॥ गौरित्यर्थइति॥ वृत्तिमतेत्वत्रनीलीत्येव॥ प्रतिपदोक्तपरिभाषायास्तेनप्रवृत्यनंगीका
रादितिबोध्यं॥ नरूपादीनामिति॥ उवर्णांतत्वाभावेनङीषोऽप्रवृत्तावपिगुणवचनेतिष्यङ्वारणायैषांगुणवचनत्वंनेष्यतइतिबो
ध्यं॥ ऐक्यमित्यत्रब्राह्मणादित्वात्ष्यञ्॥ शुक्लेतित्विति॥ इदमप्ययुक्तं॥ खरुसंयोगोपेतिनिषेधात्॥ पीतेत्युचितं॥ पुंयोगादा॥ पुंस्ये
वयःप्रसित्थइति॥ ननुशूद्रादिशब्देभ्योवस्तुतःशूद्रत्वविशिष्टायांशूद्रस्यस्त्रीत्येवंरूपेणविवक्षितायांङीपूनप्राप्नोतीतिचेन्नेष्यत
एवात्रङीष्॥ चतुर्भिःप्रकारैरतस्मिन्स्सइत्येतद्भवति॥ तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्यादितिप्रकृतसूत्रस्यभाष्यादिति
केचित्। अन्येत्वंथवापुनरस्तुतस्यामेवप्रष्टशब्दइतितदुत्तरभाष्यादुक्तविषयेपिङीषिष्यते। वस्तुतस्तुजातिमत्वेपिशूद्रस्यस्त्रीत्येवं
रूपेणविवक्षितानतुशूद्रत्वजातिमत्वेनेतिनततष्टाप्। सर्वत्रशाक्यतावच्छेदकारोपस्वलक्षणेतिननियमः। सतिसंभवेशाक्यतावच्छे
दकारोपोलक्षणेतिनाग्नेयःस्थालीपाकइत्यत्रपुंवद्भावानापत्तिरित्याहुः। गौरादिषुबोध्यमिति। देवकदुहितेत्यर्थेतेनङीषोऽविधानाद
संगतमेतत्। तन्निषेधस्य। तृजकाभ्यांकर्त्तरीतिनिषेधस्य। नियमार्थमिति। पदस्यादितिविग्रहेसुबुत्पत्तेःप्राक्समासात्स्यशब्दस्यापद
त्वत्वात्षत्वनिषेधस्यसात्पदाद्योरित्यनेनसिद्धत्वात्॥ वाराणसीप्रसादस्यनियोगेनप्रयत्नतः मन्नालालेनविदुषामुद्रितेयंशिलाक्षरैः शुभमस्तु


इतिराघवेन्द्राचार्यकृताशब्देन्दुशेखरविषमव्याख्यासमाप्ता